

मुक्तस्वाध्यायपीठम्
(Institute of Distance Education)
राष्ट्रियसंस्कृतसंस्थानम्
( मानितविश्वविद्यालयः )

**FJA-I-02**
**सारावली**

फलितज्योतिषाचार्यः
प्रथमवर्ष, द्वितीयपत्रम्

खण्डः



# प्रव्रज्यायोगः नाभसयोगाश्च

*पाठलेखनम्*

**डॉ. राधावल्लभशर्मा**
अं.सहायकाचार्यः
राष्ट्रियसंस्कृतसंस्थानम्
बलाहारपरिसरः
(पाठः 19)

**डॉ. रामेश्वरदयालशर्मा**
अं.सहायकाचार्यः
राष्ट्रियसंस्कृतसंस्थानम्
जयपुरपरिसरः
(पाठः 20, 21)

(संयुक्तलेखनं–22)

**डॉ. नीरजत्रिवेदी**
अं. सहायकाचार्यः
राष्ट्रियसंस्कृतसंस्थानम्
जयपुरपरिसरः

**श्रीमुकेशकुमारः**
अतिथिप्रवक्ता, मुक्तस्वाध्यायपीठम्
राष्ट्रियसंस्कृतसंस्थानम्
नवदेहली

*सम्पादनम्*

**डा. श्यामदेवमिश्रः**
वरिष्ठसहायकाचार्यः, मुक्तस्वाध्यायपीठम्
राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.), नवदेहली

*प्रबन्धसम्पादकः*

**डॉ. बिनोदकुमारसिंहः**
कुलसचिवः
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

*पाठ्यक्रमसंयोजनम्*

**डा. श्यामदेवमिश्रः**
वरिष्ठसहायकाचार्यः, मु.स्वा.पीठम्
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

*प्रकाशनम्*

**प्रो. रमाकान्तपाण्डेयः**
निदेशकः, मुक्तस्वाध्यायपीठम्
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

प्रथममुद्रणम् – **२०१४** पुनर्मुद्रणम् – **२०१५, २०१६**

ISBN : 978-81-929486-1-4


प्रयुक्तकागदम् – Agro-based environment Friendly.

**पृष्ठविन्यासः**

**राजीवकुमारसिंहः**
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

**श्री संजयकुमारशर्मा**
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

**मुद्रकः**

**सत्यम पब्लिशिंग हाऊस**

एन-**३/२५**, मोहन गार्डन, उत्तम नगर, नई दिल्ली-**११००५९**

## खण्डपरिचयः

भो अध्येतृ! आचार्यप्रथमवर्षस्य द्वितीयपत्रस्य पञ्चमे खण्डे भवतः स्वागतं खण्डेऽस्मिन् चत्वारः पाठाः वर्तन्ते। तद्यथा –

| | | |
|---|---|---|
| **एकोनविंशः पाठः** | – | प्रव्रज्यायोगः (प्रथमः) |
| **विंशः पाठः** | – | प्रव्रज्यायोगः (द्वितीयः) |
| **एकविंशः पाठः** | – | नाभसयोगः (प्रथमः) |
| **द्वाविंशः पाठः** | – | नाभसयोगः (द्वितीयः) |

ग्रहाणां कुण्डल्यां स्थिति-युति-दृष्टिसम्बन्धबलात् विशिष्टाः योगा उत्पद्यन्ते। एतेषु केचन शुभप्रदा केचन अशुभप्रदाः भवन्ति। प्रव्रज्यायोगाः सामाजिकदृष्ट्या कदाचित् अशुभत्वेन परिगण्यन्ते किन्तु आध्यात्मिकदृशा शुभा एव। अस्तु, प्रव्रज्या अर्थात् संन्यासः। कस्मिन् योगे जातकः प्रव्रज्यामाकाङ्क्षते? कस्मिन् उत्कटतपस्वी भवति? के च प्रव्रज्याभङ्गकारकाः योगाः स्युरित्येतेषां समेषां विषयाणां विस्तरेण निदर्शनं सप्तदश-अष्टादशपाठयोः वर्तते।

अथ च यवनैः प्रतिपादितानां नाभसयोगानां भारतीयज्योतिषे अन्तर्भावः नियोजनञ्च वराहमिहिरेण अकारि। तामेव परम्परामनुसृत्य सारावलीकारेण कल्याणवर्मणा स्वग्रन्थेऽपि एतेषां द्वात्रिंशन्नाभसयोगानां सफलं वर्णनं कृतं विद्यते। तेषामेव योगानामत्र एकोनविंशति-विंशतिपाठयोः अतिविस्तरेण उपस्थापनं कृतम्।

इत्थमस्य खण्डस्य पठनेन नूनमेव विविधानां विशिष्टयोगानां ज्ञानं भविष्यति।



# एकोनविंश: पाठ: – प्रव्रज्यायोग: ( प्रथम: )

**पाठसंरचना**



## १९.१ प्रस्तावना

योगविचारनामकेऽस्मिन् पाठे भवत: स्वागतम्। ज्योतिषशास्त्रे योगानां विशिष्टं महत्त्वं सर्वैरङ्गीक्रियते। इदं निर्विवादं तथ्यं यत् मनुजस्य कर्मणि कस्यचित् विशिष्टस्य योगस्य उपस्थितिप्रभावात् तस्य मनुजस्य तस्मिन्-तस्मिन् कर्मणि कार्यक्षेत्रविशेषे जायते प्रवृत्ति: विशिष्टसुखदु:खवाप्तिश्च। इदमेव रहस्यं योगानाम्। शास्त्रेऽस्मिन् सन्ति बहव: योगा:। एतेषु प्राधान्यं भजन्ते संन्यासादियोगादय:। संन्यासादियोगेष्वपि सन्ति नैके योगा:। तद्यथा-तपस्वीयोग:, अन्नत्यागीयोग:, यशस्वीमुनियोग: शान्ततापसयोगप्रभृतय:। अत्र विषयेऽस्मिन् विशिष्टं ज्ञानं प्राप्स्याम:।

## १९.२ उद्देश्यम्

अनेन पाठेन भवान् –

- ➢ संन्यासादियोगान् निरूपयितुं शक्ष्यति।
- ➢ सन्यासयोगेष्वपि विविधभेदान् वक्तुं प्रभविष्यति।
- ➢ तपस्वी–अन्नत्यागी–यशस्वीप्रभृतिसन्यासयोगानां लक्षणनिरूपणे पटुः भविष्यति।

## १९.३ संन्यासादियोगाः

योगेष्वयं योगः कश्चन विशिष्टो वर्तते यतः संन्यासधारणं प्रत्येकऽस्मिन् जने न भवति। जन्मकुण्डल्यां केषाञ्चित् विशिष्टानां ग्रहाणां सम्बन्धेन, राशिसम्बन्धेन, दृष्टिसम्बन्धेन वा एतादृशाः योगाः परिकल्प्यन्ते ज्योतिषशास्त्रविशारदैः। अस्य योगस्यापि बहवः भेदाः ग्रन्थकारैः प्रदर्शिताः। ते सर्वेऽपि इह प्रदर्श्यन्ते।

### १९.३.१ संन्यासयोगः

संन्यासादियोगानां वर्णनं सारावल्यां श्रीमत्कल्याणवर्मणा इत्थं प्रकारेण विहितम्–

**योगा विभक्ताश्चतुरादिसंस्थैर्व्यासाद्ग्रहैः कैरपि तापसानाम्।**
**जन्मादि तेषामपरैर्मुनीन्द्रैः, संवेदितं तत्कथयाम्यशेषात्॥**

**पदच्छेदः–** योगा, विभक्ताः, चतुरादिसंस्थैः, व्यासाद्, ग्रहैः, कैः, अपि, तापसानाम्, जन्मादि, तेषाम्, अपरैः, मुनीन्द्रैः, संवेदितम्, तत्, कथयामि, अशेषात्।

**अन्वयः–** चतुरादिसंस्थैः, ग्रहैः, योगा, विभक्ताः, कैः, अपि, तापसानां, व्यासाद् (उक्तवन्तः)। तेषाम् जन्मादि (येषां जातकानां) भवति। अपरैः, मुनीन्द्रैः, संवेदितम्, तत्, अशेषात्, कथयामि।

**प्रतिपदार्थः–** चतुरादिसंस्थैः = एकस्मिन्नेव भावे चत्वारः, पञ्च, षट्, सप्त वा ग्रहाः, तैः संस्थैः, ग्रहैः = सूर्यादिग्रहैः, योगाः = सन्यासादयः, विभक्ताः = संविभक्ताः, कैः = कैश्चित्, अपि, तापसानां = तपस्विजनानाम्, व्यासाद् = विस्तरेण, तेषाम् = जातकानाम्, जन्मादि = जन्मसमये, अपरैः = अन्यैः आचार्यैः, मुनीन्द्रैः = पाराशर–गर्गादिमुनिभिः, संवेदितम् = कथितम् तत्, अशेषात् = निर्विशेषं सम्पूर्णं, कथयामि = ब्रवीमि।

**भावार्थः–** यदि जन्मसमये चत्वारः, पञ्च, षट्, सप्त वा ग्रहाः एकस्मिन् राशौ स्थिताः स्युः तदा संन्यासयोगो भवतीति बहुभिः पाराशर–गर्ग–यवनादिभिः आचार्यैः ख्यापितम्। येषु योगेषु तपस्विनां, साधूनां वा जन्म भवति तान् सर्वानपि योगान् अहम् ब्रवीमि इति।

उदाहरणं यथा–

**जन्मलग्नम्**




दिनांकः = **१०.१२.१९९३**

समयः = **६.४५** A.M.

स्थानम् = कांगड़ा (हि.प्र.)

**विशेषः**

बृहज्जातकेऽपि आचार्यवराहमिहिरेण प्रोक्तम्–

**एकस्थैश्चतुरादिभिर्बलयुतैर्जाताः पृथग्वीर्यगैः**
**शाक्ताजीविकभिक्षुवृद्धचरका निर्ग्रन्थवन्याशना।**
**माहेयज्ञगुरुक्षपाकरसितप्राभाकरीनैः क्रमात्**
**प्रव्रज्या बलिभिः समाः परजितैस्तत्स्वामिभिः प्रच्युतिः॥**

अर्थात्– एकस्मिन् राशौ यदा चतुरादयो बलिनः भौमादयः ग्रहा भवन्ति तदा शाक्यादिकाः प्रव्राजकाः भवन्तीति। तत्र चतुरादीषु एकः ग्रहः बली तदा तद्ग्रहजन्यः प्रवज्या भवति किन्तु तेषु द्वयोः बलिनोः सत्योः द्विगुणात्मकः प्रव्रज्या त्रयाणां बलवत्वे त्रिगुणात्मकः प्रव्रज्या इत्येवमवगन्तण्यम्। अर्थात् प्रव्रज्यायाः कोटिः श्रेणिः उच्चतरा गभीरा जायते। किञ्च एकत्रस्थेषु ग्रहेषु यदि मङ्गलः बली तदा मङ्गलजनितायां प्रव्रज्यायां जातकः शाक्यः अर्थात् रक्तवस्त्रधारी शाक्तः शक्त्याः देव्या वा उपासकः सन्यासी भवति। बुधे बलवति आजीविकः अर्थात् एकदण्डी भवति। गुरौ बलवति भिक्षुकः क्षपाकरे चन्द्रे सबले सति वृद्धश्रावकः कापालिकः सिते शुक्रे बलवति चक्रधरः तथा प्राभाकरिणि शनौ बलवति निर्ग्रन्थः नग्नः वन्यः वनवासी तपस्वी भवति। किन्तु प्रव्रज्याकारकग्रहाणां निर्बलत्वे सति प्रव्रज्यायाः च्युतिः अर्थात् प्रव्रज्याभङ्गः जायते। एकस्थानस्थितस्य ग्रहस्य परस्परं क्रमेण प्रव्रज्या भवतीति प्रतिपादितम्।

फलदीपिकायां मन्त्रेश्वराचार्येण विहितम्–

**ग्रहैश्चतुर्भिः सहिते खनाथे त्रिकोणगैः केन्द्रगतैस्तु मुक्तः।**
**लग्ने गृहान्ते सति सौम्यभागे केन्द्रे गुरौ कोणगते च मुक्तः॥**

अर्थात्– जन्मकाले खनाथः दशमेशः यदि चतुर्भिः ग्रहैः युक्तं भूत्वा केन्द्रे त्रिकोणस्थाने वा स्यात् तदा जातकः मुक्तः अर्थात् संन्यासी भवति। तथैव यदि लग्नम् अन्तिमे शुभग्रहस्य नवांशे नवांशे स्यात् अपि च तत्र शुभग्रहाः स्थिताः स्युः, बृहस्पतिः च केन्द्रस्थः कोणस्थो वा स्याच्चेत् जातकः संन्यासी भवति।

### १९.३.२ तपस्वीयोगः

**सूर्येन्दुशुक्रार्यमहीसुतेषु सूर्येन्दुसोमात्मजभूमिजेषु।**
**एकस्थितेषु प्रभवेत्तपस्वी भान्वारमन्दज्ञसितेषु चैव॥**

**पदच्छेदः–** सूर्य, इन्दु, शुक्र, आर्य, महीसुतेषु, सूर्य, इन्दु, सोम, आत्मज, भूमिजेषु, एकस्थितेषु, प्रभवेत्, तपस्वी, भानु, आर, मन्द, ज्ञ, सितेषु, च, एव।

**अन्वयः–** (यदि) सूर्य–इन्दु–शुक्र–आर्य–महीसुतेषु–सूर्य–इन्दु–सोमात्मज–भूमिजेषु अथवा भानु–आर–मन्द–ज्ञ–सितेषु, चैव एकस्थितेषु (राशिषु) भवन्ति, सः (जातकः) तपस्वी प्रभवेत्।

**प्रतिपदार्थः–** सूर्यः, इन्दुः = चन्द्रः, शुक्रः, आर्यः = ग्रहेषु श्रेष्ठः यतोहि शुभतमः गुरुः, महीसुतेषु = मही पृथिवी तस्याः पुत्रः भौम एतेषु सूर्यादिग्रहेषु, अथवा सूर्येन्दुसोमात्मजभूमिजेषु = सूर्यः, इन्दुः = चन्द्रः, सोमात्मजः = सोमः अर्थाच्चन्द्रः तस्य आत्मजः पुत्रः बुधः, भूमिजः = मङ्गलः एतेषु, अथवा भान्वारमन्दज्ञसितेषु = भानु = सूर्यः, आर = मङ्गलः, मन्दः = ग्रहेषु सर्वाधिकः मन्दगतिकः शनिः, ज्ञ = ज्ञाता बुधः सितेषु = सितः अर्थात् श्वेतः, भौमादिपञ्चग्रहेषु सर्वाधिकं प्रशस्तः दीप्तिमान् अतः सितः शुक्र एतेषु एकस्थितेषु = एकराशिस्थेषु (भवन्ति) सः जातकः तपस्वी = संन्यासी, प्रभवेत् = भवेत् इति।

**भावार्थः–** कस्यचित् जातकस्य जन्मकुण्डल्यां यदि सूर्य–चन्द्रमा–मङ्गल–गुरु–शुक्राः, अथवा सूर्य–चन्द्रमा–बुध–भौमा: अथवा सूर्य–मङ्गल–शनि–बुध–शुक्राः एकस्मिन् राशौ भवेयुः तदा जातकः तपस्वी भवति।

उदाहरणं यथा–

रा. ६ | ४
७ | श.५ | ३बृ.
८ | २
९शु. | सू.चं.बु.११मं. | १
१० | १२के.

**विशेषः**

जातकपारिजातग्रन्थे दैवज्ञवैद्यनाथेन प्रोक्तम्–

**शीतांशुराशीशमिनात्मजो वा,**
**लग्नेश्वरं पश्यति दीक्षितः स्यात्।**
**भौमर्क्षगे मन्ददृगाणभागे**
**मन्देक्षिते शीतकरे यतिः स्यात्॥**

**अर्थात्–** शीतांशुः शीता अंशवः किरणाः यस्य सः शीतांशुश्चन्द्रः, राशीशः जन्मराशिस्वामी, इनात्मजः इनः सूर्यः तस्यामजः सूर्यपुत्रः शनिः एतेषां चन्द्र–राशीश–शनैश्चराणां मध्ये यः कोऽपि लग्नेशं पश्यति तदा जातकः दीक्षायुतः स्यात्। भौमराशौ शनेः द्रेष्काणे नवांशे च चन्द्रमा स्याच्चेत्, शनिना दृष्टः स्यात् तदा संन्यासी योगो भवति।

### १९.३.३ प्रव्राजकयोगः

प्रकृष्टेन व्रजति गच्छतीति प्रव्राजकः। उत्तमकार्याय येषां सांसारिकमायायाः गमनं भवति ते प्रव्राजकाः भवन्ति। तेषु सन्यासीयोगेषु परिगणितोऽयम् अन्यतमः भवति प्रव्राजकयोगः। योगेऽस्मिन् जातकः दीक्षितं भूत्वा संन्यासमाचरति।

**कुजेन्दुसूर्यज्ञपुरोहितैश्च तीक्ष्णांशुचन्द्रार्किशशाङ्कजैश्च।**
**सूर्येन्दुभूपुत्रशनैश्चरैः स्यादेकर्क्षगैः प्रव्रजितो मनुष्यः॥**

**पदच्छेदः –** कुज, इन्दु, सूर्य, ज्ञ, पुरोहितैः, च, तीक्ष्ण, अंशु, चन्द्र, अर्कि, शशाङ्कजैः, च। सूर्य, इन्दु, भूपुत्र, शनैश्चरैः स्यात् एकर्क्षगैः, प्रव्रजितः, मनुष्यः।

**अन्वयः –** कुजेन्दुसूर्यज्ञपुरोहितैः च, तीक्ष्णांशुचन्द्रार्किशशाङ्कजैः, च, सूर्येन्दुभूपुत्रशनैश्चरैः, एकर्क्षगैः मनुष्यः प्रव्रजितः स्यात्।

**प्रतिपदार्थः –** कुजः = कुः पृथिवी तस्याः जातः कुज अथवा कुत्सितः जातः अर्थात् प्रकृत्या अशुभ इति कुजः मङ्गलः, इन्दुः = चन्द्रमा, (सूर्य) ज्ञः = बुधः, पुरोहितैः = बृहस्पतिः, एतैः मङ्गलादिभिः ग्रहैः (च), तीक्ष्णांशुः = तीक्ष्वाः अंशवः किरणाः यस्य सः तीक्ष्णांशुः सूर्यः, चन्द्रः, अर्किः = शनिः, शशाङ्कजः = शशाङ्कात् चन्द्रात् जात उत्पन्नः बुधः

एभिः, सूर्य, इन्दुः, भूपुत्रः = मङ्गलः, शनैश्चरैः = शनिः एभिः, एकर्क्षगैः = एकराशिस्थितैः, मनुष्यः = जनः, प्रव्रजितः = प्रव्रज्यायोगे दीक्षितः, स्यात् = भवेत्।

**भावार्थः–** यदि जन्मकुण्डल्यां भौमः, चन्द्रः, सूर्यः, बुधः, गुरुः एते ग्रहाः अथवा सूर्यः, चन्द्रः, शनिः, बुधः एते ग्रहाः अथवा सूर्यः, चन्द्रः, मंगलः शनिः एते ग्रहाश्च एकस्मिन् राशौ भवेयुस्तदा प्रव्राजकयोगो भवति।

**विशेषः –**

जातकपारिजाते दैवज्ञवैद्यनाथेन कथितम्–

**जातः पञ्चचतुर्वियच्चरवरैः केन्द्रत्रिकोणस्थितै–**
**रेकस्थैर्बलिभिः प्रधानबलवत्खेटाश्रमस्थो भवेत्।**
**आदित्यासितजीवशुक्रधरणीपुत्रेन्दुतारासुतै**
**र्वानप्रस्थविवासभिक्षुचरकाः शाक्यो गुरुर्जीवकः॥**

**अर्थात् –** बलशालिनः पञ्च चत्वारः वा वियच्चरवराः = श्रेष्ठा आकाशचराः ग्रहाः केन्द्रे त्रिकोणस्थाने च साकमेव स्थिताः स्युः तथा एतेषु यः ग्रहः सर्वबलीयान् स्यात् तस्य ग्रहस्य आधारेण वक्ष्यमाण प्रकारेण आश्रमस्थः प्रव्रज्यायोगधारको जातकः भवति। सूर्यः यदि बली स्यात्तदा वानप्रस्थी, शनिः यदि बली स्यात् तदा नग्नसाधुः, गुरुः यदि बली स्यात् तदा भिक्षुकः, शुक्रः यदि बली स्यात् तदा चरकः सततभ्रमणशीलः, मङ्गलः यदि बली स्यात् तदा शाक्यमुनिः, चन्द्रः बली स्यात्तदा गुरुः शास्त्रपारङ्गतः तपस्वी आचार्यः बुधश्च बली स्यात्तदा जीवको भवति।

इदानीं प्रव्रजितानां विविधानां वानप्रस्थी–तपस्वीप्रभृतीनां लक्षणमुच्यते –

**"वानप्रस्थस्तपस्वी वनगिरिनिलयो नग्नशीलो विवासा**
**भिक्षुः स्यादेकदण्डी सततमुपनिषत्तत्वनिष्ठो महात्मा।**
**नानादेशप्रवासीचरकपतिवरः शाक्ययोगी कुशीलो**
**राजश्रीमान् यशस्वी गुरुरशनपरो जल्पको जीवकः स्यात्॥"**

**अर्थात् –** वने यः प्रस्थितः गतः सः वानप्रस्थः। अरण्येषु पर्वतेषु यः तपरतः सः तपस्वी। वनानि गिरयः पर्वताः एव निलयं गृहं यस्य सः वनगिरिनिलय अर्थात् वने अथवा पर्वते यः निवसति। वस्त्रं विना यः निवसति सः नग्नशीलः नग्नसाधुः। वासात् गृहात् विरतः सः विवासा इति। भिक्षयाय जीवति सः भिक्षुः। एकं दण्डं धारयति यः सः एकदण्डी इत्युच्यते। कठोपनिषदादीनां यत् सारभूतं तत्त्वम् आत्मसाक्षात्कारनिरूपकं तस्य चिन्तने निष्ठः रतः यः सः आत्मतत्त्वनिष्ठः महात्मा। नानादेशेषु अटनशीलः नैरन्तर्येण यः विचरति सः चरकः। यः भोजने सदैव तत्परो भवति सः जीवकः।

फलदीपिकायाम् आचार्यमन्त्रेश्वरेण लिखितम्–

**शशी दृगाणे रविजस्य संस्थितः**
**कुजार्किदृष्टः प्रकरोति तापसम्।**
**कुजाशंके वा रविजेन दृष्टो**
**नवांशतुल्यां कथयन्ति तां पुनः॥**

**अर्थात् –** शशी चन्द्रमा रविजस्य शनेः द्रेष्काणे स्थितो भूत्वा शनिना मङ्गलेन च दृष्टः स्यात् तदा जातकः तापसो भवति। कुजस्य नवांशे अवस्थितः चन्द्रः यदि शनिना दृष्टः स्यात् तदा जातकः मङ्गलानुसारम् अर्थात् उद्वेगेन उन्मादेन संसारात् छिन्नो भूत्वा प्रव्रज्याग्रहणं करोति।

### १९.३.३ व्रतीयोगः

**कुजार्किसोमात्मजदेववन्दितैः कुजार्किचन्द्रात्मजसूर्यभार्गवैः।
रवीन्दुभौमासितदानवप्रियैर्भवन्ति सूता व्रतसंयुता नराः॥**

**रवीन्दुभौमेन्दुजजीवभार्गवैः शशाङ्कभौमार्किबुधेड्यभास्करैः।
कुजेन्दुसूर्यार्किसितेन्दुसम्भवैर्भवेदमीभिः सहितैर्नरो व्रती॥**

**पदच्छेदः –** कुज, अर्कि, सोमात्मज, देववन्दितैः, कुज, अर्कि, चन्द्रात्मज, सूर्य, भार्गवैः, रवि, इन्दु, भौम, असित, दानवप्रियैः, भवन्ति, सूता, व्रतसंयुता, नराः। रवि, इन्दु, भौम, इन्दुज, जीव, भार्गवैः, शशाङ्क, भौम, अर्कि, बुध इड्य, भास्करैः। कुज, इन्दु, सूर्य, अर्कि, सित, इन्दुसम्भवैः, भवेत्, अमीभिः, सहितैः, नरः, व्रती।

**अन्वयः –** कुजार्किसोमात्मजदेववन्दितैः, कुजार्किचन्द्रात्मजसूर्यभार्गवैः, रवीन्दुभौमासितदानवप्रियैः सूता व्रतसंयुता नराः भवन्ति।

रवीन्दुभौमेन्दुजजीवभार्गवैः, शशाङ्कभौमार्किबुधेड्यभास्करैः। कुजेन्दुसूर्यार्कि-सितेन्दुसम्भवैः अमीभिः सहितैः नरः व्रती भवेत्॥

**प्रतिपदार्थः –** कुज = कोः भूमेः जातः उत्पन्नः कुजः मङ्गलः, अर्कि = अर्कस्य पुत्रः पुमान् अर्किः शनिः, सोमात्मजः = बुधः, देववन्दितैः = गुरुः, एभिः, कुजः = मङ्गलः, इन्दुः = चन्द्रः, सूर्यः, अर्कि = शनिः, चन्द्रात्मजः = बुधः सूर्यः, भार्गवैः भृगोः अपत्यः पुत्रः पुमान् भार्गवः = शुक्रः एभिः समस्तैः, रविः, इन्दुः, भौमः, असितः = शनिः, दानवप्रियैः = दानवानां प्रियः सचिवः शुक्रः शुक्रैः एभिः योगैः, सूता = उत्पन्नाः, नराः = मनुष्याः, व्रतसंयुताः = व्रतयुक्ताः, भवन्ति।

रविः, इन्दुः, भौमः, इन्दुजः = बुधः, जीवः = बृहस्पतिः, भार्गवैः = शुक्रः एभिः, शशाङ्कः = चन्द्रः, भौमः = मङ्गलः, अर्किः = शनिः, बुधः, ईड्य = प्रशंसनीयः, गुरुः, भास्करैः = सूर्यः, एभिः (भवन्ति), कुज = मङ्गलः, इन्दुः = चन्द्रः, सूर्यः, अर्किः = शनिः, असितैः = अश्वेतः कृष्णः शनिः, एभिः योगैः, अमीभिः = एतैः, सहितैः = संयुक्तैः, नरः = जनः, व्रती = व्रतयुक्तः, प्रव्राजकः (भवति)।

**भावार्थः –** यदि जातकस्य जन्मकुण्डल्यां मंगल-शनिबुधगुरवः अथवा भौमशनिबुधसूर्यशुक्राः अथवा सूर्यचन्द्रभौमशनिशुक्राः एकस्मिन् राशौ स्युः तदा जातको व्रती भवति।

यदि जन्मकुण्डल्यां सूर्यचन्द्रभौमबुधगुरुशुक्राः अथवा चन्द्रभौमशनिबुधगुरुसूर्याः अथवा भौमचन्द्रसूर्यशनिशुक्रबुधाः एकस्मिन् राशौ स्युः तदा जातको व्रती भवति।

**विशेषः–**

जातकपारिजाते दैवज्ञवैद्यनाथेन कथितम्–

**कुजार्कसोमार्कजदेववन्दितैः
कुजार्कचन्द्रात्मजमन्दभार्गवैः।
रवीन्दुभौमासितदानवप्रियै
र्भवन्ति जाता व्रतसंयुता नराः॥**

**अर्थात्–** सूर्यः, भौमः, चन्द्रः, देववन्दितः = गुरुः, शनिः एतैः सर्वैः (अथवा) सूर्यः, भौमः, बुधः, शनिः, शुक्रः एतैः ग्रहैः (अथवा) सूर्यः, भौमः, चन्द्रः, शनिः, शुक्रः एतै ग्रहैः एकराशिस्थितैः व्रती योगो भवति।

**बोधप्रश्नाः**



१. तपस्वीयोगः कदा भवति?

२. सूर्य-चन्द्रमा-मङ्गल-शनयः एकस्मिन् राशौ भवेयुः तदा कः योगो भवति?

३. संन्यासयोगः कदा भवति?

## १९.४ अन्ये मुनियोगाः

एतावत्पर्यन्तं भवान् सन्यास-तपस्वी-प्रवाजकयोगानामध्यमनम् अकरोत्। अतः परम् ग्रन्थोक्ता अन्ये मुनियोगाः क्रमशः विविच्यन्ते। तेष्वादौ वनपर्वतचारीयोगः विचार्यते–

### १९.४.१ वनपर्वतस्थतपस्वीयोगः

**सितारसूर्यात्मजजीवभास्करैः**
**कुजेन्दुदेवेड्यबुधार्कनन्दनैः।**
**सितेन्दुपुत्रार्किशशाङ्कभूमिजैः**
**भवेत्तपस्वी वनपर्वताश्रयः॥**

**पदच्छेदः –** सित, आर, सूर्यात्मज, जीव, भास्करैः, कुज, इन्दु, देव, ईड्य, बुध, अर्कनन्दनैः, सित, इन्दुपुत्र, अर्कि, शशाङ्क, भूमिजैः, भवेत्, तपस्वी, वनपर्वताश्रयः।

**अन्वयः –** सितारसूर्यात्मजजीवभास्करैः, कुजेन्दुदेवेड्यबुधार्कनन्दनैः, सितेन्दुपुत्रार्किशशाङ्कभूमिजैः, वनपर्वताश्रयः तपस्वी भवेत्।

**प्रतिपदार्थः –** सितः = शुक्रः, आरः = भौमः, सूर्यात्मजः = शनिः, जीवः = बृहस्पतिः, भास्करैः = सूर्यः एतैः समस्तैः, कुजः= मङ्गलः, इन्दुः=चन्द्रमा, देव ईड्यः = देवैः पूज्यः बृहस्पतिः, बुधः अर्कनन्दनैः = सूर्यपुत्रः एभिः सहितैः, सितः = शुक्रः, इन्दुपुत्रः = बुधः, अर्किः = शनिः, शशाङ्कः = चन्द्रमा, भूमिजैः = मङ्गलः एभिः, वनपर्वताश्रयः=वनेषु पर्वतेषु यस्य आश्रयो भवति सः (यतिः)। तपस्वी=यतिः, भवेत्=स्यात्।

**भावार्थः –** यदि कस्यचित् जातकस्य जन्मकुण्डल्यां शुक्र-मङ्गल-शनि-गुरु-सूर्याः अथवा मङ्गल-चन्द्रमा-गुरु-बुध-शनयः अथवा शुक्र-बुध-शनि-चन्द्रमा-मङ्गलाश्च एकस्मिन् राशौ भवेयुः तदा सः जातकः वनपर्वतस्थः तपस्वी भवति।

### १९.४.२ अन्नत्यागीयोगः

अन्नस्य यः त्यागं करोति सः अन्नत्यागी भवति। केचन जनाः फलाशिनः भवन्ति ते अन्नभक्षणं न कुर्वन्ति। अत्र प्रस्तूयते योगविशेषः–

**चन्द्रेन्दुपुत्रारसुरेड्यभास्करैः शशाङ्कसूर्येन्दुजशुक्रभूमिजैः।**
**स्थितैरमीभिः सहितैर्नृसम्भवा भवन्ति वन्द्या मुनयोऽन्नदूषकाः॥**

**पदच्छेदः –** चन्द्र, इन्दुपुत्र, आर, सुरेड्य, भास्करैः, शशाङ्क, सूर्य, इन्दुज, शुक्र, भूमिजैः। स्थितैः, अमीभिः, सहितैः, नृ, सम्भवा, भवन्ति, वन्द्या, मुनयः, अन्नदूषकाः।

**अन्वयः –** चन्द्रेन्दुपुत्रारसुरेड्यभास्करैः, शशाङ्कसूर्येन्दुजशुक्रभूमिजैः, अमीभिः सहितैः, स्थितैः नृसम्भवा, मुनयः, अन्नदूषकाः, वन्द्या भवन्ति।

**प्रतिपदार्थः –** चन्द्रः, इन्दुपुत्रः = बुधः, आरः = मङ्गलः, सुरेड्यः = सुराणां देवानाम् ईड्यः पूज्यः गुरुः, भास्करैः = सूर्यश्च एतैः, शशाङ्कः = चन्द्रमा, सूर्यः, इन्दुजः = बुधः, शुक्रः, भूमिजैः = मङ्गलः एभिः, अमीभिः = एतैः, सहितैः = युक्तैः, स्थितैः = अवस्थितैः एकराशिगतैः, नृसम्भवा = मनुष्याणां कुलेऽपि जाताः, मुनयः = ऋषयः, अन्नदूषकाः = अन्नं न स्वीकुर्वन्ति ये ते अन्नत्यागिनः, वन्द्याः = प्रशंसनीयाः, भवन्ति =जायन्ते।

**भावार्थः –** यदि जातकस्य कुण्डल्यां चन्द्र–बुध–मंगल–गुरु–सूर्याः अथवा चन्द्रमा–सूर्य–बुध– शुक्र–मङ्गलाः एकस्मिन् राशौ भवेयुस्तदा जातकः वन्दनीयः अन्नत्यागी मुनिः भवति।

**उदाहरणं यथा–**

यथा अस्मिन् उदाहरणे एकस्मिन् धनुराशौ चंद्रः, सूर्यः, बुधः, शुक्रः, मङ्गल इति पञ्च ग्रहाः वर्तन्ते। अतः अन्नत्यागीमुनियोगः अत्र निर्मितः। येन जातकोऽयम् अन्नत्यागीमुनिः भवितुमर्हति।

१
११
२
रा.१२
श.१०
३
चं.सू.मं.
९ गु.बु.
४
के.६
8शु.
५
७

**१९.४.३ यशस्वीमुनियोगः**

**सितेन्दुजीवार्कजसूर्यलोहितैः सितार्कभौमार्किशशाङ्कसोमजैः।**
**एकत्र यातैर्गगनेचरैः सदा भवन्ति जाता मुनयो यशस्विनः॥**

**पदच्छेदः –** सित, इन्दु, जीव, अर्कज, सूर्य, लोहितैः, सित, अर्क, भौम, अर्कि, शशाङ्क, सोमजैः। एकत्र, यातैः, गगनेचरैः, सदा, भवन्ति, जाता, मुनयः, यशस्विनः।

**अन्वयः –** सितेन्दुजीवार्कजसूर्यलोहितैः, सितार्कभौमार्किशशाङ्कसोमजैः। एकत्र, गगनेचरैः, यातैः, सदा, मुनयः यशस्विनः भवन्ति।

**प्रतिपदार्थः –** सितः = शुक्रः, इन्दुः = चन्द्रमा, जीवः = बृहस्पतिः, अर्कजः = शनिः, सूर्यः, लोहितैः = रक्तवर्णः मङ्गल एतैः, सितः = शुक्रः, अर्कः = सूर्यः, भौमः = मङ्गलः, अर्किः = शनिः, शशाङ्कः = चन्द्रमा, सोमजैः = बुध एभिः, गगनेचरैः = ग्रहैः, एकत्र = एकस्मिन् स्थानेराशौ, यातैः = प्राप्तैः, (सदा) मुनयः = ऋषयः, यशस्विनः = यशशालिनः (भवन्ति)।

**भावार्थः –** यदि जन्मकुण्डल्यां शुक्र–चन्द्रमा–गुरु–शनि–सूर्य–मङ्गलाः अथवा शुक्र–सूर्य–मङ्गल– शनि–चन्द्रमा–बुधाश्च एकस्मिन् राशौ भवेयुस्तदा जातको यशस्वी मुनिः भवति।

**बोधप्रश्नाः**

४. अन्नत्यागीयोगः कदा भवति?

५. शुक्र–चन्द्रमा–गुरु–शनि–सूर्य–मङ्गलाः एकस्मिन् राशौ भवेयुस्तदा कः योगो भवति।



६. वनपर्वतस्थयोगः कदा जायते?

## १९.५ अन्ये तापसयोगाः



### १९.५.१ फलमूलादिभक्षकतपस्वीयोगः

**रवीन्दुवागीशशनैश्चरैश्च शनैश्चरेन्द्वर्कसितैरवश्यम्।**
**रवीन्दुपुत्रक्षितिजेन्द्रपूज्यैस्तपस्विनः स्युः फलमूलभक्षिणः॥**

**पदच्छेदः –** रवि, इन्दु, वागीश, शनैश्चरैः, च, शनैश्चर, इन्दु, अर्क, सितैः, अवश्यम्। रवि, इन्दुपुत्र, क्षितिज, इन्द्रपूज्यैः, तपस्विनः, स्युः, फलमूलभक्षिणः।

**अन्वयः –** रवीन्दुवागीशशनैश्चरैः, शनैश्चरेन्द्वर्कसितैः, रवीन्दुपुत्रक्षितिजेन्द्रपूज्यैः, च अवश्यम् फलमूलभक्षिणः तपस्विनः स्युः।

**प्रतिपदार्थः –** रविः, इन्दुः = चन्द्रः, वागीशः = वाक् इतिशब्देन यद्यपि वाणी इत्यस्य बोधः भवति यस्य ईशः स्वामी बुधो वर्तते किन्त्वत्र वाक् इतिपदेन सरस्वतीदेव्याः ज्ञानदेव्याः ज्ञानस्य वा ग्रहणं कार्यम्। येन वाचः ज्ञानस्य ईशः देवोऽधिपः गुरुः इत्यर्थः अत्र अवगन्तव्यः। शनैश्चरैः = शनिः एभिः, च, अथवा, शनैश्चरः, इन्दुः, अर्कः = सूर्यः, सितैः = शुक्रश्चैतैः, अवश्यम् = निःसन्देहम् रविः, इन्दुपुत्रः = बुधः, क्षितिज = क्षितिः पृथिवी तस्याः जात उत्पन्नः क्षितिजः मङ्गलः, इन्द्रपूज्यैः = इन्द्र इति संज्ञया समेषां देवानां ग्रहणमत्र भवति यतः स एव देवाधिपतिः तेन इन्द्रेण देवराज्ञा यः पूज्यः बृहस्पतिः गुरुश्च एभिः, तपस्विनः = यतिनः, फलमूलभक्षिणः = फलानि मूलानि च ये भुक्त्वा स्वजीवनं यापयन्ति ते फलमूलभक्षका स्युः = भवेयुः।

**भावार्थः –** यदि कस्यचित् जातकस्य जन्मकुण्डल्यां सूर्य-चन्द्रमा-गुरु-शनयः अथवा शनि-चन्द्रमा- सूर्य-शुक्राः अथवा सूर्य-बुध-मङ्गल-रवः एकस्मिन् राशौ भवेयुस्तदा जातकः फलमूलभक्षकः तपस्वी भवति।

### १९.५.२ वल्कलचीरधारीयोगः

**वक्रार्कसोमात्मजदानवेड्या भौमेन्दुवागीशशशाङ्कपुत्राः।**
**एकर्क्षगा जन्मनि यस्य जन्तोर्भवेद् व्रती वल्कलचीरधारी॥**

**पदच्छेदः –** वक्र, अर्क, सोमात्मज, दानवेड्या, भौम, इन्दु, वागीश, शशाङ्कपुत्राः। एकर्क्षगा, जन्मनि, यस्य, जन्तोः, भवेद्, व्रती, वल्कलचीरधारी।

**अन्वयः –** यस्य जन्तोः जन्मनि वक्रार्कसोमात्मजदानवेड्या, भौमेन्दुवागीशशशाङ्कपुत्राः, एकर्क्षगा (भवन्ति) व्रती वल्कलचीरधारी भवेत्।

**प्रतिपदार्थः –** यस्य जन्तोः = जातकस्य, जन्मनि = जन्मकाले, वक्रः = कुटिलः मङ्गलः स्वभावात् कदाचित् चतुरः कदाचित् धूर्तः अनिश्चितवृत्तः, अर्कः = सूर्यः, सोमात्मजः = बुधः, दानवेड्याः = दानवानाम् असुराणाम् इड्यः पूज्यः शुक्रः एते ग्रहाः, भौमः = मङ्गलः, इन्दुः = चन्द्रमा, वागीशः = गुरुः, शशाङ्कपुत्राः = बुधः एते ग्रहाः, एकर्क्षगा = एकस्मिन्नेव राशौ स्थिताः स्युः, व्रती = संन्यासदीक्षितः, वल्कलचीरधारी = वल्कलस्तु वृक्षवल्कः तस्य चीरं वस्त्रं यः धारयति स वल्कलवस्त्रधारी भवति।

**भावार्थः –** यदि कस्यचित् जातकस्य जन्मलग्ने मङ्गल-सूर्य-बुध-शुक्राः अथवा मङ्गल-चन्द्रमा, गुरु-बुधाः एकस्मिन् राशौ भवेयुस्तदा सः व्रती जातकः वल्कलवस्त्रधारी भवति।

### १९.५.३ शान्ततापसयोगः

**शशीन्दुपुत्रक्षितिजार्कपुत्रा बुधक्षमापुत्रसुरेड्यसौराः।**
**एकर्क्षगा जन्मनि यस्य सूतौ कुर्वन्ति तं तापसमेव शान्तम्॥**

**पदच्छेदः –** शशि, इन्दुपुत्र, क्षितिज, अर्कपुत्राः, बुध, क्षमापुत्र, सुरेड्य, सौराः। एकर्क्षगा, जन्मनि, यस्य, सूतौ, कुर्वन्ति, तं, तापसम्, एव, शान्तम्।

**अन्वयः –** यस्य सूतौ जन्मनि शशीन्दुपुत्रक्षितिजार्कपुत्रा, बुधक्षमापुत्रसुरेड्यसौराः एकर्क्षगा, तं शान्तं तापसमेव कुर्वन्ति।

**व्याख्या –** यस्य, सूतौ=जातके, जन्मनि=जन्मकाले, शशिः=चन्द्रमा, इन्दुपुत्रः=बुधः, क्षितिजः=मङ्गलः, अर्कपुत्रा=शनिः एते ग्रहाः, (बुधः) क्षमापुत्रः=मङ्गलः, सुरेड्यः=गुरुः, सौराः=शनिः एते ग्रहाः, एकर्क्षगा=एकराशिस्थिताः स्युः, तदा, तं=जातकं शान्तं=प्रशान्तं, तापसम्, कुर्वन्ति।

**भावार्थः –** यस्य जातकस्य जन्मकुण्डल्यां चन्द्र-बुध-मङ्गल-शनयः अथवा बुध-मङ्गल-गुरु-शनयः एकस्मिन् राशौ स्युः तदा जातकः शान्तप्रियः तपस्वी भवति।

**बोधप्रश्नाः**

७. वल्कलचीरधारीयोगः कदा भवति?

८. शान्ततापसयोगः कदा जायते?

### १९.६.१ अपरः फलमूलादिभक्षकयोगः

**"चन्द्रार्कभार्गवशशाङ्कसुता बलस्था**
**भौमेन्दुपुत्रसितभास्करनन्दनाश्च।**
**मन्देन्दुवाक्पतिसिता नियतं यतीनां**
**कुर्वन्ति जन्म फलपाककृताशनानाम्॥"**

**पदच्छेदः –** चन्द्र, अर्क, भार्गव, शशाङ्कसुता, बलस्था, भौम, इन्दुपुत्र, सित, भास्करनन्दनाः च। मन्द, इन्दु, वाक्पति, सिता, नियतं यतीनां, कुर्वन्ति, जन्म, फल, पाक, कृत अशनानाम्।

**अन्वयः –** चन्द्रार्कभार्गवशशाङ्कसुता बलस्था, भौमेन्दुपुत्रसितभास्करनन्दनाः, च, मन्देन्दुवाक्पतिसिता, नियतं, यतीनां, फलपाककृताशनानां जन्म, कुर्वन्ति।

**प्रतिपदार्थः –** चन्द्रः, अर्कः = सूर्यः भार्गवः=शुक्रः, शशाङ्कसुता=बुधः एते ग्रहाः, बलस्था=बलिनः दिक्-काल-स्थानादिबलानाश्रित्य, भौमः = मङ्गलः, इन्दुपुत्रः=बुधः, सितः=शुक्रः, भास्करनन्दनाः=शनिः एते, च=अथवा। मन्दः=शनिः, इन्दुः=चन्द्रमा, वाक्पतिः=गुरुः, सिता=शुक्रः एते ग्रहाः, नियतम्=एकस्मिन् स्थाने स्थितम् यतीनाम्=साधूनाम्, जन्म, फलपाककृताशनानाम्=पक्वस्य फलस्य अशनं भक्षणं कुर्वन्ति ये ते फलपाककृताशनास्तेषां कुर्वन्ति।

**भावार्थः –** यदि कस्यचित् जातकस्य जन्मकुण्डल्यां चन्द्र-सूर्य-शुक्र-बुधाः अथवा मङ्गल-बुध- शुक्र-शनयः अथवा शनि-चन्द्रमा-गुरु-शुक्राः एकस्मिन् राशौ स्थितं भूत्वा बलिनो भवन्ति तदा सः जातकः फलभक्षणकर्ता मुनिः भवति।

### १९.६.२ पर्वतवनवासीयतियोगः

**रविकुजशशिशुक्रैश्चन्द्रभौमज्ञसूर्यै-**
**र्गुरुसितरविमन्दैः शुक्रजीवेन्दुवक्रैः।**
**कुजबुधसितचन्द्रैरेभिरेकर्क्षयातै-**
**र्भवति गिरिवनौकस्तापसः सर्ववन्द्यः॥**

**पदच्छेदः** – रवि-कुज-शशि-शुक्रैः, चन्द्र-भौम-ज्ञ-सूर्यैः, गुरु-सित-रवि-मन्दैः, शुक्र-जीव-इन्दु- वक्रैः। कुज-बुध-सित-चन्द्रैः, एभिः, एकर्क्षयातैः, भवति गिरिवनौकः, तापसः, सर्ववन्द्यः।

**अन्वयः** – रविकुजशशिशुक्रैः, चन्द्रभौमज्ञसूर्यैः, गुरुसितरविमन्दैः, शुक्रजीवेन्दुवक्रैः, कुजबुधसितचन्द्रैः, एभिः, एकर्क्षयातैः, सर्ववन्द्यः गिरिवनौकः तापसः भवति।

**प्रतिपदार्थः** – रविः=सूर्यः, कुजः=मङ्गलः, शशिः=चन्द्रः, (शुक्रश्च एतैः) चन्द्रः, भौमः=मङ्गलः, ज्ञः=बुधः, सूर्यश्च एभिः, गुरुः, सितः=शुक्रः, रविः=सूर्यः, मन्दैः=शनिः एतैः, शुक्रः जीवः=बृहस्पतिः, इन्दुः=चन्द्रमा, वक्रैः=मङ्गलश्चैभिः, कुजः=मङ्गलः, बुधः, सितः=शुक्रः, चन्द्रश्च एतैः एभिः=अमीभिः, एकर्क्षयातैः=एकराशिस्थितैः, सर्ववन्द्यः=सर्वपूज्यः, गिरिवनौकः=पर्वतवनवासी, तापसः=तपस्वी, भवति।

**भावार्थः** – यदि कस्यचित् जातकस्य कुण्डल्यां सूर्य-मङ्गल-चन्द्रमा-शुक्राः अथवा चन्द्रमा-मङ्गल-बुध-सूर्याः अथवा गुरु-शुक्र-सूर्य-शनयः अथवा शुक्र-गुरु-चन्द्रमा-मङ्गलाः अथवा मङ्गल-बुध- शुक्र-चन्द्रमसः एकस्मिन् राशौ स्युः तर्हि जातकः पर्वतेषु वनेषु निवसन् वन्दनीयः तपस्वी भवति। अर्थात् सर्वेऽपि जनाः तं पुरुषं नमन्ति।

### १९.६.३ दुःखीमुनियोगः

**सितशशिकुजगुरुमन्दैश्चन्द्रेन्दुजभौमदेवगुरुशुक्रैः।**
**रविशशिकुजबुधजीवैर्भवति यतिदुःखितो दीनः॥**

**पदच्छेदः** – सित, शशि, कुज, गुरु, मन्दैः, चन्द्र, इन्दुज, भौम, देवगुरु, शुक्रैः। रवि, शशि, कुज, बुध, जीवैः, भवति, यतिदुःखितः, दीनः।

**अन्वयः** – सितशशिकुजगुरुमन्दैः, चन्द्रेन्दुजभौमदेवगुरुशुक्रैः। रविशशिकुजबुध जीवैः यतिदुःखितो दीनः भवति।

**प्रतिपदार्थः** – सितः=शुक्रः, शशिः=चन्द्रः, कुजः=मङ्गलः, गुरुः=जीवः, मन्दैः=शनिः एभिः, अथवा चन्द्रः, इन्दुजः=बुधः, भौमः=मङ्गलः, देवगुरुः=बृहस्पतिः, शुक्रैः=भार्गवश्च एतैः। रविः=सूर्यः, शशिः=चन्द्रमाः, कुजः=मङ्गलः बुधः, जीवैः=गुरुश्च एभिः, यतिः=साधुः, दुःखितः=दुःखी पीडितः, दीनः=दरिद्रः, भवति।

**भावार्थः** – यदि कुण्डल्यां शुक्र-चन्द्रमा-मङ्गल-गुरु-शनयः अथवा चन्द्रमा-बुध-मङ्गल-गुरु-शुक्राः अथवा सूर्य-चन्द्रमा-मङ्गल-बुध-गुरव एकस्मिन् राशौ भवेयुस्तदा तपस्वी जातकः दीनः दुःखी च भवति बहुधा शारीरिकादिकष्टम् आप्नोति।

### १९.६.४ जटाधारी वल्कलवस्त्रधारी मुनियोगश्च

**कुजार्किदेवेड्यसितेन्दुपुत्रैः शनीनसोमात्मजचन्द्रभौमैः।**
**समं गतैः स्युः सबलैर्यथोक्तैर्जटाधरा वल्कलधारिणश्च॥**

**पदच्छेद:** – कुज, अर्कि, देवेड्य, सित, इन्दुपुत्रै:, शनि, इन, सोमात्मज, चन्द्र, भौमै:, समं, गतै:, स्यु:, सबलै:, यथा, उक्तै:, जटाधरा, वल्कलधारिण: च।

**अन्वय:** – कुजार्किदेवेड्यसितेन्दुपुत्रै:, शनीनसोमात्मजचन्द्रभौमै:, यथोक्तै:, सबलै:, समं गतै: जटाधरा वल्कलधारिणश्च स्यु:।

**प्रतिपदार्थ:** – कुज:= कु: पृथिवी तस्या: जात उत्पन्न: पुत्र: कुज: मङ्गल:, अर्कि:=शनि:, देवेड्य:=देवपूज्य: गुरु:, सित:=शुक्र:, इन्दुपुत्रै:=बुधश्च: एभि:, शनि: इन:=सूर्य:, सोमात्मज:= बुध: चन्द्र:, भौमै:=मङ्गलश्चैतै:, यथा, उक्तै:=पूर्वोक्तै:, सबलै:=बलयुक्तै:, समं=एकराशिगतमिति भाव:, गतै:=प्राप्तै:, जटाधरा=जटाधारिण:, च=अथवा, वल्कलधारिण:=वल्कलवस्त्रधारिण:, स्यु:=भवेयु:।

**भावार्थ:** – यदि कुण्डल्यां मङ्गल-शनि-गुरु-शुक्र-बुधा: अथवा शनि-सूर्य-बुध-चन्द्र-मङ्गला बलिन: भूत्वा एकस्मिन् राशौ भवेयुस्तदा जातक: जटाधारी वल्कलवस्त्रधारी च भवति।

**बोधप्रश्न:**

९. दु:खीमुनियोगं लिखत।

१०. पर्वतवनवासीयतियोगं लिखत।

११. फलमूलादिभक्षकयोगं लिखत।

## १९.७ सारांश:

भवान् सारावल्यां निर्दिष्टप्रव्राजकयोगविषये ज्ञातवान्। योगेषु प्रव्राजकयोग: कश्चन वैशिष्ट्यं भजते। अत्र भवता विस्तृतरूपेण प्रव्राजकयोगविषये ज्ञानं प्राप्तम्। कस्य ग्रहस्य प्रभावात् क: योगो भवति इत्यत्र प्रदर्शितम्। संन्यासादियोग:, तपस्वीयोग:, प्रव्राजकयोग:, व्रतीयोग:, वनपर्वतस्थतपस्वीयोग:, अन्नत्यागीयोग:, यशस्वीमुनियोग:, फलमूलादिभक्षकतपस्वी-योग:, वल्कलचीरधारीयोग:, शान्ततापसयोग:, पर्वतवनवासीप्रभृतियतियोग:, दु:खीमुनियोग:, जटाधारीवल्कलवस्त्रधारी प्रभृतिमुनियोग: इत्यादय: सर्वेऽपि विषया: भवता अधीता:।

## १९.८ शब्दावली

| | | | |
|---|---|---|---|
| १. | संवेदितम् | = | प्रचोदितम्। |
| २. | व्रतसंयुता: | = | व्रतयुक्ता:। |
| ३. | वनपर्वताश्रय: | = | वनेषु पर्वतेषु च समाश्रित:। |
| ४. | अन्नदूषका: | = | अन्नत्यागिन:। |
| ५. | यतीनां | = | साधूनाम्। |

## १९.९ सन्दर्भ:

१. सारावली-डॉ. मुरलीधर चतुर्वेदी, मोतीलाल बनारसीदास, संस्करण-२००३।

## १९.१० सहायकग्रन्था:

१. बृहज्जातकम्-केदारदत्त जोशी, मोतीलाल बनारसीदास, संस्करणम्-२००५।

२. फलदीपिका-डॉ. हरिशंकर पाठक:, चौखम्बा सुरभारती प्रकाशन वाराणसी, संस्करणम्-२०१०।

३. जातकपारिजातः, गोपेश कुमार ओझा, मोतीलाल बनारसीदास, संस्करणम्-२००५।

## १९.११ बोधप्रश्नोत्तराणि

१. यदि कस्यचित् जातकस्य जन्मकुण्डल्यां सूर्य-चन्द्रमा-मङ्गल-गुरु-शुक्राः अथवा सूर्य-चन्द्रमा-बुध-भौमाः अथवा सूर्य-मङ्गल-शनि-बुध-शुक्राः एकस्मिन् राशौ भवेयुस्तदा जातकः तपस्वी भवति।

२. सूर्य-चन्द्रमा-मङ्गल-शनयः एकस्मिन् राशौ भवेयुस्तदा व्रतीयोगो भवति।

३. जन्मकाले दशमेशः यदि चतुर्भिः ग्रहैः सह केन्द्रे त्रिकोणस्थाने वा स्यात् तदा संन्यासी योगो भवति। तथैव यदि लग्नः अन्तिमेषु अंशेषु स्यात्, तत्र शुभग्रहाः स्थिताः स्युः बृहस्पतिश्च केन्द्रस्थ स्याच्चेत् जातकः संन्यासी योगो भवति।

४. यदि जातकस्य कुण्डल्यां चन्द्र-बुध-मङ्गल-गुरु-सूर्याः अथवा चन्द्रमा-सूर्य-बुध-शुक्र-मङ्गलाः एकस्मिन् राशौ भवेयुस्तदा जातको वन्दनीयः अन्नत्यागी मुनिः भवति।

५. शुक्र-चन्द्रमा-गुरु-शनि-सूर्य-मङ्गलाः एकस्मिन् राशौ भवेयुस्तदा यशस्वीमुनियोगो भवति।

६. यदा शुक्र-मङ्गल-शनि-गुरु-सूर्याः अथवा मङ्गल-चन्द्रमा-गुरु-बुध-शनयः अथवा शुक्र-बुध-शनि-चन्द्रमा-मङ्गलाः एकस्मिन् राशौ भवेयुस्तदा सः जातकः वनपर्वतस्थ तपस्वी भवति।

७. भवति यदा जन्मलग्ने मङ्गल-सूर्य-बुध-शुक्राः अथवा मङ्गल-चन्द्रमा-गुरु-बुधाः एकस्मिन् राशौ भवेयुस्तदा सः जातको वल्कलवस्त्रधारी व्रती भवति।

८. यस्य जातकस्य जन्मकुण्डल्यां चन्द्र-बुध-मङ्गल-शनयः अथवा बुध-मङ्गल-गुरु- शनयः एकस्मिन् राशौ स्युस्तदा जातकः शान्तप्रिय तपस्वी भवति।

९. यदि कुण्डल्यां शुक्र-चन्द्रमा-मङ्गल-गुरु-शनयः अथवा चन्द्रमा-बुध-मङ्गल-गुरु- शुक्राः भवेयुस्तदा जातकः तपस्वी दीन-दुःखी च भवति।

१०. यदि कस्यचित् जातकस्य कुण्डल्यां सूर्य-मङ्गल-चन्द्रमा-शुक्राः अथवा चन्द्रमा- मङ्गल-बुध-सूर्या एकस्मिन् राशौ स्यात्तदा जातकः पर्वतेषु वनेषु निवसन् वन्दनीयः तपस्वी भवति।

11. यदि कस्यचित् जातकस्य जन्मकुण्डल्यां चन्द्र-सूर्य-शुक्र-बुधाः अथवा मङ्गल-बुध- शुक्र-शनयः एकस्मिन् राशौ स्थिताः स्युरपि च ते बलिनो भवन्ति तदा सः जातकः फलभक्षणकर्ता मुनिः भवति।

## १९.१२ अभ्यासप्रश्नाः

१. व्रतीयोगं व्याख्यायत।

२. शान्ततापसयोगम् उदाहरणपुरस्सरं विमर्शत।

३. जटाधारीवल्कलवस्त्रधारीमुनियोगम् उदाहरणपुरस्सरं पर्यालोचयत।

—◆—

# विंशः पाठः - प्रव्रज्यायोगः ( द्वितीयः )

**पाठसंरचना**



## २०.१ प्रस्तावना

आचार्यकल्याणवर्मणा विरचितेन सारावलीग्रन्थस्य अष्टादशे पाठे भवतः सुस्वागतम् अस्ति। जातकशास्त्रस्य अध्ययनपरम्परायां पूर्वस्मिन् पाठे भवान् प्रथमे प्रव्रज्यायोगे संन्यासादीनां योगानां विषये सम्यक्रूपेण पठितवान्। तत्रापि तपस्वीयोगः, प्रव्राजकयोगः, व्रतीयोगः, वनपर्वतस्थतपस्वीयोगः, अन्नत्यागीयोगः, यशस्वीयोगः, फलमूलादिभक्षकतपस्वीयोगः, वल्कलचीरधारीयोगः, दुःखीमुनियोगः, जटाधारीप्रभृतिविविधाः योगाः वर्णिताः। तदनन्तरं पाठेऽस्मिन् प्रव्रज्याभङ्गयोगः, विशिष्टप्रव्रज्यायोगः, भाग्यहीनप्रव्रज्यायोगः, नृपसंन्सासयोगः, दुःखीसंन्यासीयोगानाञ्च विषये भवान् सरलरीत्या सम्यक्रूपेण च ज्ञास्यति। एवं प्रकारेण प्रव्रज्याकारकग्रहाणां फलविवेचनस्य सम्यक्ज्ञानं भविष्यति। तत्रापि सूर्य-चन्द्र-मङ्गल-बुध-गुरु-शुक्र-शनि-प्रभृतीनां प्रव्रज्याकारकग्रहाणां फलविषये विशेषरूपेण ज्ञास्यति।

## २०.२ उद्देश्यम्

अस्य पाठस्य अध्ययनेन भवान्–



- प्रव्रज्याभङ्गयोगनिर्धारणे समर्थः भविष्यति।

- ➢ विशिष्टप्रव्रज्यायोगस्य निरूपणे कुशलतां प्राप्स्यति।
- ➢ भाग्यहीनप्रव्रज्यायोगं निरूपयितुं शक्ष्यति।
- ➢ नृपसंन्यासयोगविषये पटुः भविष्यति।
- ➢ प्रव्रज्याकारकग्रहाणां विषये ज्ञात्वा अन्यान् अपि बोधयितुं सक्षमः भविष्यति।

## २०.३ प्रव्रज्याभङ्गयोगः

अत्र सर्वप्रथमं जिज्ञासा समुदेति यत् प्रव्रज्यायोगः किमिति, कस्य च तस्य प्रव्रज्यायोगस्य निवारणोपायः भङ्गयोगो वा? अर्थात् ज्योतिषशास्त्रे विविधेषु शुभाशुभयोगेषु प्रव्रज्याकारकयोगोऽपि प्रामुख्यं भजते। संन्यासयोगस्य पर्यायः प्रव्रज्यायोगः भवति। प्रव्रज्याभङ्गयोगस्य विवेचनं श्रीमत्कल्याणवर्मणा स्वकीये सारावलीग्रन्थे श्लोकेऽस्मिन् एवं विहितम्–

**प्रव्रज्येशे दिनकरगते मुक्तिमन्तोऽतिशक्ताः**
**प्रव्रज्यायाः सुबलसहितैः स्थैर्यमाहुर्ग्रहेन्द्रैः।**
**सम्पूर्णानां वशमनुगतैः प्रच्युतिस्तैबर्हुत्वे**
**वीर्योपेतैर्भवति बहुभिः सद्बलस्यानुपूर्व्यात्॥**

**पदच्छेदः –** प्रव्रज्येशे दिनकरगते मुक्तिमन्तः अतिशक्ताः, प्रव्रज्यायाः सुबलसहितैः स्थैर्यम् आहुः ग्रह इन्द्रैः सम्पूर्णानां वशम् अनुगतैः प्रच्युतैः तैः बहुत्वे वीर्योपेतैः भवति बहुभिः सद्बलस्य आनुपूर्व्यात्।

**अन्वयः –** प्रव्रज्येशे दिनकरगते मुक्तिमन्त अतिशक्ताः सुबलसहितैः ग्रहेन्द्रैः प्रव्रज्यायाः स्थैर्यमाहुः। सम्पूर्णानां वशमनुगतैः तैः प्रच्युतिः बहुत्वे बहुभिः वीर्योपेतैः बलस्यानुपूर्व्यात् भवति।

**प्रतिपदार्थः –** प्रव्रज्येशे=प्रव्रज्याकारकग्रहे, दिनकरगते=सूर्यगते सूर्यसहिते, मुक्तिमन्तः अतिशयेन संसारान् मुक्तिकामाः, अतिशक्ताः = अतिदृढाः अतिप्रबलभावयुक्ताः, सुबलसहितैः=बलयुक्तैः, ग्रहेन्द्रैः = सूर्यैः, प्रव्रज्यायाः = प्रव्रज्यायोगे, सम्पूर्णानां = समस्तानां, वशमनुगतैः = पराजितैः, तैः = ग्रहैः, प्रच्युतिः = वियोगः प्रव्रज्याभावात्, बहुत्वे = बहूनां ग्रहाणां, बहुभिः, वीर्योपेतैः=बलपूर्वकैः, बलस्यानुपूर्व्यात् = प्रव्रज्यायोगकारकग्रहेषु दृष्टियुतिप्रभृतिसम्बन्धात् यः ग्रहः सर्वाधिकः बली तस्य सर्वाधिकः प्रभावः तस्मात् यः न्यूनबली तस्य अल्पतरः प्रभाव इत्येवं क्रमेण भवति।

**भावार्थः –** यदा यस्य जातकस्य जन्माङ्गचक्रे प्रव्रज्याकारकग्रहः सूर्यसानिध्ये अर्थात् यस्मिन् राशौ सूर्यः तस्मिन्नेव राशौ स्यात्तदा जातकः संन्यासयोगे श्रद्धावान् अत्यासक्तः अतिदृढः। यदि प्रव्रज्याकारकग्रहः प्रबलः स्यात्तर्हि प्रव्रज्यायाः स्थैर्यं भवति। अर्थात् एकदा प्रव्रज्या स्वीकृतः तदा तस्यामेव प्रव्रज्यायां रतः भवति। प्रव्रज्याकारकग्रहः अन्यैः सर्वैः ग्रहैः पराजितः भवेत्तदा जातकः प्रव्रज्यां स्वीकृत्य पुनः त्यजति अर्थात् पुनः सांसारिको भवति। यदि प्रव्रज्यायाः कारकाः बहवः ग्रहाः स्युः तर्हि तत्तद्ग्रहमाश्रित्य प्रव्रज्यात्वं स्वीकरोति तत्रापि तेषु प्रव्रज्यकारकग्रेषु यः सर्वाधिकः बली तस्य दशाऽन्तर्दशायां न केवलं प्रव्रज्यां स्वीकरोति अपितु तद्ग्रहस्य अनुकूलं प्रव्राजकस्य प्रवृत्तिः जायते। गुरुप्रभाववशात् अतिशयज्ञानात् परमतत्त्वान्वेषणे प्रवृत्तिवशात् जातकः प्रव्रज्यां स्वीकुर्यात्। मङ्गलस्य प्रभावात् कदाचित् संसारात् उद्विग्नो भूत्वा उन्मादियुक्तं सन्यासं धारयेत्। इत्येवमवगन्तव्यम्।

**पुनः प्रव्रज्याभङ्गयोगज्ञानम्–**

आचार्यकल्याणवर्मणा श्लोकेस्मिन् प्रव्रज्याभङ्गयोगं प्रतिपादयति–

**प्रव्रज्यायाः स्वामी रविमुषिततनुर्निरीक्षितो वाऽन्यैः।**
**याचितदीक्षा भवति च यवनाधिपतेर्यथा वाक्यम्॥**

**पदच्छेदः –** प्रव्रज्यायाः स्वामी रवि मुषित तनुः निरीक्षितः वा अन्यैः याचित दीक्षा भवति च यवनाधिपतेः यथा वाक्यम्।

**अन्वयः –** यवनाधिपतेः वाक्यं यथा प्रव्रज्यायाः स्वामी रविमुषिततनुः वा अन्यैः च निरीक्षितः याचितदीक्षा भवति।

**प्रतिपदार्थः –** यवनाधिपतेः=यवनाचार्यस्य, वाक्यं=मतानुसारेण, प्रव्रज्यायाः=प्रव्रज्यायोगे, स्वामी=अधिपतिः ग्रहः, रविमुषिततनुः=सूर्यसान्निध्येन (अस्ङ्गतः), अन्यैः=अन्यग्रहैः, निरक्षितः=दृष्टः, याचितदीक्षा=संसारत्यागाय दीक्षायै याचनां करोति यः सः।

**भावार्थः –** यदा सूर्यसान्निध्ये यः कोऽपि ग्रहः अस्तंगतः, अन्यग्रहैः दृष्टः स्यात्तदा जातकः दीक्षां संन्यासं वा याचयति। सः जातकः गृहे एव तापसयोगं इच्छति। परन्तु तदाऽपि प्रव्रज्यायोगं नैव धारयति अर्थात् प्रव्रज्यां तु वाञ्छति किन्तु तदर्थं दृढमनस्कः न भवति।

## २०.४ विशिष्टप्रव्रज्यायोगः

सारावलीग्रन्थकारेण श्रीमत्कल्याणवर्मणा विशिष्टप्रव्रज्यायोगः पाठेऽस्मिन् श्लोके एवं वर्णितः –

**शशी दृकाणे रविजस्य संस्थितः**
**कुजार्किदृष्टः प्रकरोति तापसम्।**
**कुजांशके वा रविजेन दृष्टो**
**नवांशतुल्यं कथयन्ति तत्पुनः॥**

**पदच्छेदः –** शशी दृकाणे रविजस्य संस्थितः कुज अर्कि दृष्टः प्रकरोति तापसं कुजांशके वा रविजेन दृष्टः नवांशतुल्यं कथयन्ति तत्पुनः।

**अन्वयः –** रविजस्य दृकाणे संस्थितः कुजार्किदृष्टः शशी तापसं प्रकरोति। रविजेन कुजांशके वा दृष्टः नवांशतुल्यं तत्पुनः कथयन्ति।

**प्रतिपदार्थः –** रविजस्य = शनेः, दृकाणे = द्रेष्काणे, संस्थितः = स्थितः, कुजार्कि-दृष्टः = मङ्गलशनिदृष्टः, शशि=चन्द्रः, तापसं=संन्यासं, प्रकरोति=प्रकटयति, रविजेन=शनिना, कुजांशके=भौमस्य नवांशे, दृष्टः=अवलोकितः, नवांशतुल्यं=नवांशसदृशं, कथयन्ति=प्रतिपादयन्ति।

**भावार्थः –** एकराशिगतानां चतुर्णां ग्रहाणां स्थितिवशात् यद्यपि प्रव्रज्यायोग आचार्यकल्याणवर्मणा स्वकीये सारावलीग्रन्थे उक्तः किन्तु चतुरादिग्रहाणां स्थितिवशात् ये विविधाः प्रव्रज्यायोगा उक्ताः तान् अतिरिच्य विशिष्टः राजयोगः श्लोकेऽस्मिन् प्रतिपादितः। तदनुसारेण, जातकस्य जन्माङ्गचक्रे चन्द्रः शनेः द्रेष्काणे भौमेन शनिना च दृष्टः तदा संन्यासयोगो भवति। पुनः चन्द्रः भौमस्य नवांशे शनिना दृष्टः स्यात्तदा द्वितीयः तापसयोगः जातकाय सम्भवति। एतयोर्योगयोरन्यतरेण यदि प्रव्रज्या स्यात् तर्हि कः ग्रहः कारकः? कस्यां दशायां वा प्रव्रज्याग्रहणं भवेत्? इत्येतदर्थं ग्रन्थकारः सङ्केतयति यत् नवांशे यः राशिस्तस्य अधिपग्रहानुसारम् अर्थात् तत्ग्रहवशात् प्रव्रज्यां स्वीकरोति। अथ च तस्य ग्रहस्य दशाऽन्तर्दशायां सः तपस्वी भवति।

पुनः श्रीमत्कल्याणवर्मणापादोन श्लोके एवमेव विशिष्टप्रव्रज्यायोगः वर्ण्यते–

**जन्माधिपः सूर्यसुतेन दृष्टः**
**शेषैरदृष्टः पुरुषस्य सूतौ।**
**आत्मीयदीक्षां कुरुते ह्यवश्यं**
**पूर्वोक्तमत्रापि विचारणीयम्॥**

**पदच्छेदः –** जन्माधिपः सूर्यसुतेन दृष्टः शेषै अदृष्टः पुरुषस्य सूतौ आत्मीय दीक्षां कुरुते ह्यवश्यं पूर्वोक्तम् अत्रापि विचारणीयम्।

**अन्वयः –** पुरुषस्य सूतौ जन्माधिपः सूर्यसुतेन दृष्टः शेषैरदृष्टः हि अवश्यम् आत्मीयदीक्षां कुरुते, अत्रापि पूर्वोक्तं विचारणीयम्।

**प्रतिपदार्थः –** पुरुषस्य=जातकस्य, सूतौ=जन्माङ्गचक्रे, जन्माधिपः=राशेरधिपतिः (जन्माङ्गे चन्द्रः यस्मिन् राशौ भवति तस्य राशेरधिपतिः जन्माधिपतिः भवति) सूर्यसुतेन=शनिना, दृष्टः=अवलोकितः शेषैरदृष्टः=अन्यैः अवशिष्टग्रहैरदृष्टः, अवश्यम्, आत्मीयदीक्षा=राशीशग्रहस्य स्वकीय– दीक्षा, कुरुते, अत्रापि=अस्मिन् योगेऽपि, पूर्वोक्तं=पूर्व–कथितं, विचारणीयम्=प्रतिपादनीयम्।

**भावार्थः –** प्रकारान्तरेण विशिष्टप्रव्रज्यायोगप्रकरणे सारावलीग्रन्थकारेण दैवज्ञेन श्रीमत्कल्याणवर्मणा अपरोऽयं विशिष्टयोगः जातकस्य जन्माङ्गचक्रे वर्णितः। यदा यस्य कस्यचिदपि जातकस्य जन्माङ्गचक्रे जन्माधिपः (अर्थात् जन्मकाले जन्मकुण्डल्यां चन्द्रः यस्मिन् राशौ अवस्थितः तस्य राशेरधिपतिः ग्रह एव राशीश भवति, सः जन्माधिपः) केवलं शनिना अवलोकितः शेषैरवशिष्टग्रहैः अदृष्टः भवति तदा जन्माधिपतिः ग्रह एव प्रव्रज्याकारकः भवति, अर्थात् तस्यैव राशीशग्रहस्य एव जातकः प्रव्रज्या गृह्णाति। परन्तु योगेऽस्मिन् पूर्वोक्तयोगवत् प्रव्रज्याकारकस्य ग्रहस्य सबलत्वम् अस्तत्वञ्च विचारणीयं ज्योतिर्विद्भिः।

## २०.५ भाग्यहीनप्रव्रज्यायोगः

प्रव्रज्यायोगेऽस्मिन् भाग्यहीनप्रव्रज्यायोगोऽपि आचार्येण प्रतिपादितः। अर्थात् अस्मिन् योगे समुत्पन्ने जातके भाग्यविरहितः तपस्वी भवति। अत्र श्लोकेऽस्मिन् दैवज्ञेन योगोऽयं एवं निरुपितः–

**जन्मपतिर्विकलाङ्गः पश्यति सौरिं चतुष्टये प्रबलम्।**
**यस्य स भाग्यविहीनः प्रव्रज्यां प्राप्नुयात् पुरुषः॥**

**पदच्छेदः –** जन्मपतिः विकलाङ्गः पश्यति सौरिं चतुष्टये प्रबलं यस्य स भाग्यविहीनः प्रव्रज्यां प्राप्नुयात् पुरुषः।

**अन्वयः –** यस्य जन्मपतिः विकलाङ्गः चतुष्टये प्रबलं सौरिं पश्यति सः पुरुषः भाग्यविहीनः (सन्) प्रव्रज्यां प्राप्नुयात्।

**प्रतिपदार्थः –** यस्य = जातकस्य, जन्मपतिः = जन्माधिपः (जन्मराशीशः), विकलाङ्गः = निर्बलः (विकल – अङ्गः), चतुष्टये = केन्द्रस्थाने (**१,४,७१०** केन्द्रस्थानानि), सौरिं = शनिं (सूर्यपुत्रं), पश्यति = अवलोकयति, सः = जातकः, पुरुषः = नरः, भाग्यविहीनः = भाग्यरहितः, प्रव्रज्यां = संन्यासयोगं, प्राप्नुयात्।

**भावार्थः –** वस्तुतः विविधेषु जातकग्रन्थेषु विविधानां शुभाशुभयोगानां वर्णनं भवता अधीतम्। शुभयोगेषु राजयोगाः कार्यसिद्धियोगाः पञ्चमहापुरुषयोगाः, गजकेसरी–प्रभृतियोगाः अशुभयोगेषु च बालारिष्टयोगाः भागहीनयोगाः सन्ति। तेष्वेव अशुभयोगेषु भाग्यहीनः प्रव्रज्यायोगोऽपि

वर्तते। यदि कस्यापि जातकस्य जन्माङ्गचक्रे जन्मराशेरधिपतिः निर्बलः भवति, केन्द्रस्थाने च अवस्थितं शनिं पश्यति तर्हि अस्मिन् योगे समुत्पन्नः जातकः भाग्यविरहितः तापसयोगी भवति।

**बोधप्रश्नाः**

१. प्रव्रज्यायोगः कः भवति?

२. दिनकरशब्दस्य कोऽर्थः?

३. रविजः ग्रहः कः भवति?

४. प्रव्रज्यायोगस्य परिहाराय कः योगः ग्रन्थकारेण उक्तः?

५. जन्माधिपतिः ग्रहः कः भवति?

## २०.६ नृपसंन्यासयोगः

अत्र सर्वप्रथमं जिज्ञासा भवति यत् नृपसंन्यासयोगः किमिति। तत्र नृपयोगस्तु राजयोगस्य पर्यायः भवति। परन्तु संन्यासयोगः प्रव्रज्याकारकः तापसयोगकारकश्च वर्तते। एतयोः द्वयोः नृपसंन्यासयोगयोः सम्मेलनं कथं कदा च भवतः इति जिज्ञासायाम् श्लोकेऽस्मिन् आचार्यश्रीमत्कल्याणवर्मणा एवं वर्णितम्–

**कुमुदवनसुबन्धुं सौम्यभागे बलस्थं**
**वियति गमनशीलान् स्वोच्चभस्थांश्च शेषान्।**
**यदि दिनकरपुत्रः पश्यति प्राप्तवीर्यो**
**भवति भुवननाथो दीक्षितश्च स्वतन्त्रः॥**

**पदच्छेदः –** कुमुदवन सुबन्धुं सौम्यभागे बलस्थं वियति गमनशीलान् स्व उच्च भ स्थान् च शेषान् यदि दिनकरपुत्रः पश्यति प्राप्तवीर्यः भवति भुवननाथः दीक्षितः च स्वतन्त्रः।

**अन्वयः –** वियति सौम्यभागे बलस्थं कुमुदवनसुबन्धुं गमनशीलान् शेषान् स्वोच्चभस्थांश्च यदि प्राप्तवीर्यः दिनकरपुत्रः पश्यति (तदा) भुवननाथ च (अपि) स्वतन्त्रः दीक्षितः भवति।

**प्रतिपदार्थः –** वियति=दशमभावे (आकाशे), सौम्यभागे=शुक्लपक्षे, बलस्थं=बलिनं, कुमुदवनसुबन्धुं = कुमुदस्य कमलपुष्पस्य यत् वनं तस्य वनस्य स्थितौ पोषणे बन्धुः सहायकः यः सः कुमुदवनसुबन्धुश्चन्द्रस्तम्, गमनशीलान्=ग्रहान्, शेषान्=अवशिष्टान्, स्वोच्चभस्थान् = स्वकीयान् उच्चराशिस्थान्, प्राप्तवीर्यः=बलयुक्तः, दिनकरपुत्रः=शनिः (सूर्यपुत्रः), पश्यति = अवलोकयति, भुवननाथः=नृपः (भूपतिः), दीक्षितः=प्रव्रज्यादिषु योगेषु दीक्षा प्राप्तः, स्वतन्त्रः = संसारप्रपञ्चात् मुक्तः अथवा आत्मनः तन्त्रे शासने रतः भवति।

**भावार्थः –** प्रकृष्टेन व्रजनं गमनं प्रव्रजनम् इति। अत्र किं प्रकृष्टत्वम्? लोभ–मोह–कामादिमानवीयदोषैः ग्रस्तात् सांसारिकप्रपञ्चात् गमनं विरक्तिः अतः अस्य प्रकृष्टत्वम्। इत्थं लोभ–मोहादिविकारान् जित्वा यः मानवः सांसारिकमायातः मुक्तकामः स प्रव्राजकः। तस्य प्रव्राजकस्य इयं स्थितिः प्रव्रज्या इत्युच्यते। विविधप्रकारकाणां प्रव्राजकानां जन्मकुण्डल्याधारेण विवेचनं गते सप्तदशे पाठे वर्तमाने अष्टादशे च कृतं दृश्यते। सम्प्रति अयं प्रश्नः यत् विविध सन्यासियोगानां वर्णने कोऽयं नृपसन्यासीयोगः। यतोहि प्रथमदृष्ट्या नृपस्य सन्यासिनश्च विपरीतत्वं प्रतिभाति। यतः यः सन्यासी प्रव्राजकः सः कथं नृपः स्यात्? यः नृपः सः कथं सन्यासी भवेत्? नॄणां सांसारिकाणां जनानां पतिः अधिपो वा नृपः। सः नृपो भूत्वा सांसारिकप्रपञ्चात्

कथं मुक्तः स्यात्? किन्तु अत्राश्चर्यं न कार्यम्। श्रीराम-हरिश्चन्द्र-भर्तृहरि-शिबिप्रभृतयः बहवः राजानः नृपा एवं बभूवुः ये नृपास्तु आसन् किन्तु ते प्रव्राजकवत् सन्यासिवत् आसन्। तस्य नृपसन्यासयोगस्य सारावल्यां वर्णनमेवं लभ्यते। यदा यस्य कस्यापि जातकस्य जन्माङ्गचक्रे शुक्लपक्षस्य प्रबलः चन्द्रः शुभग्रहस्य नवांशे स्थित्य दशमे भावे स्यात् अन्याः शुभग्रहाऽपि शुभराशौ शनिग्रहेण दृष्टस्तदा जातकः नृपो भूत्वा स्वतन्त्रः तपस्वी भवतीति भवता पठितः।

## २०.७ दुःखित-संन्यासयोगः

नृपसंन्यासयोगादनन्तरं दुःखीसंन्यासयोगः श्रीमत्कल्याणवर्मणा प्रतिपादितः। योगेऽस्मिन् समुत्पन्नः जातकः संन्यासी तु भवति, परन्तु संन्यासयोगं धारयित्वा दुःखितः भवतीति दैवज्ञेन प्रतिपादितः। अत्र दुःखी संन्यासयोगविषये ग्रन्थकारेण सम्यक्रूपेण अस्मिन् श्लोके प्रतिपादितः–

**अतिशयबलयुक्तः शीतगुः शुक्लपक्षे**
**बलविरहितरिक्तं प्रेक्षते लग्ननाथम्।**
**यदि भवति तपस्वी दुःखितः शोकतप्तो**
**धनजनपरिहानः कृच्छ्रलब्धान्नपानः॥**

**पदच्छेदः** – अतिशय बलयुक्तः शीतगुः शुक्लपक्षे बलविरहित रिक्तं प्रेक्षते लग्ननाथं यदि भवति तपस्वी दुःखितः शोकतप्तः धनजनपरिहानः कृच्छ्र लब्ध अन्नपानः।

**अन्वयः** – शुक्लपक्षे अतिशयबलयुक्तः शीतगुः बलविरहितरिक्तं लग्ननाथं यदि प्रेक्षते (तदा जातः) दुःखितः शोकतप्तः धनजनपरिहानः कृच्छ्रलब्धान्नपानः तपस्वी भवति।

**प्रतिपदार्थः** – शुक्लपक्षे = अतिशयबलयुक्तः=पूर्णबलयुतः दिक्-स्थान-काल-चेष्टादिबलैः सुपुष्टः, शीतगुः= शीताः गावः किरणाः यस्य सः चन्द्रः, बलविरहितरिक्तं=बलहीनं, लग्ननाथं=लग्नेशं, प्रेक्षते=अवलोक्यते, दुःखितः=दुःखयुतः, शोकतप्तः = शोकसंतप्तः, धनजनपरिहानः=धनजनहीनश्च, कृच्छ्रलब्धान्नपानः=श्रमपूर्वकं कष्टपूर्वकं अन्नस्य पानस्य जलस्य प्राप्तिः येन क्रियते सः, तपस्वी= संन्यासी।

**भावार्थः** – प्रव्रज्यायोगप्रसङ्गेऽस्मिन् ग्रन्थकारेण आचार्येण श्रीमत्कल्याणवर्मणा दुःखितसंन्यास- माधारीकृत्य योगोऽयं मुख्यरूपेण प्रतिपादितः। तत्र जातकः संन्यासयोगं विधाय दुःखी कथं भवतीति विचारः दैवज्ञेन कृतः। अर्थात् ब्रह्मचर्यादिषु चतुर्षु आश्रमेषु संन्यासाश्रमस्तु जनानां तपसे भवति। तत्रापि संन्यासयोगोऽपि बहुविधो भवति। एतेष्वेव संन्यासादिषु योगेषु दुःखितः संन्यासयोगोऽपि अन्यतमः योगो वर्तते।

यदा यस्य कस्यापि जातकस्य जन्माङ्गचक्रे पूर्णबलयुतः शुक्लपक्षस्य चन्द्रः बलविरहितं लग्नपतिं पश्यति स्यात्तदा योगेऽस्मिन् समुत्पन्नः जातकः निर्धनः, जनविरहितः, शोकसंतप्तश्च खिन्नमनसा संन्यासं स्वीकरोति, कष्टेन च अन्नं जलं प्राप्नोति। पुनः दैवज्ञेन श्रीमत्कल्याण-वर्मणा अपरः दुःखितसंन्यासयोग उच्यते सम्यक्रूपेण श्लोकेऽस्मिन्–

**एकर्क्षगतैः सर्वैर्जन्माधिपतिर्निरीक्षितो यस्य।**
**दीक्षा तस्यावश्यं भवतीति पुरातनैः कथितम्॥**

**पदच्छेदः** – एकर्क्षगतैः सर्वैः जन्माधिपतिः निरीक्षितः यस्य दीक्षा तस्य अवश्यं भवति इति पुरातनैः कथितम्।

**अन्वयः** – यस्य जन्माधिपतिः एकर्क्षगतैः सर्वैः (ग्रहैः) निरीक्षितः तस्य दीक्षा अवश्यं भवतीति पुरातनैः कथितम्।

**प्रतिपदार्थः –** यस्य = जातकस्य, जन्माधिपतिः = जन्मराशेरधिपतिः, एकर्क्षगतैः = एकराशिस्थैः, सर्वैः = समस्तैः (ग्रहैः), निरीक्षितः = अवलोकितः, तस्य = जातकस्यैव, दीक्षा = संन्यासयोगः, अवश्यं = निश्चयः, पुरातनैः = प्राचीनैः, कथितं = प्रोक्तम्।

**भावार्थः –** आचार्येण श्रीमत्कल्याणवर्मणा प्रकारान्तरेण प्रव्रज्यायोगः पुनः कथितः। यतो हि यदा यस्य जातकस्य जन्मकुण्डल्यां जन्मराशीशः एकराशिस्थैः सर्वैः शुभग्रहै अवलोकितः तदा तस्य जातकस्य प्रव्रज्यायोगस्तु निश्चयरूपेण भवतीति प्राचीनाचार्यैः प्रतिपादितम्।

**बोधप्रश्नाः**

६. वियतिशब्दस्यात्र कोऽर्थः?

७. शीतगुः इत्यस्य शब्दस्य अर्थः लेख्यः?

८. दिनकरपुत्रः कः ग्रहः भवति?

९. चन्द्रः कस्मिन् पक्षे बली भवति?

१०. जातकः कौमारव्रतं कदा धारयति?

## २०.८ प्रव्रज्याकारकग्रहफलम्

प्रव्रज्यादीनां समेषां योगानां वर्णनात्परं सम्प्रति प्रव्रज्याकारकग्रहाणां वर्णनं दैवज्ञेन सारावलीग्रन्थकारेण श्रीमत्कल्याणवर्मणा स्वकीये सारावलीग्रन्थे मुख्यरूपेण प्रतिपादितम्। तत्रापि सर्वेषां सूर्यादीनां प्रव्रज्याकारकग्रहाणां फलम् अभिहितम्। अर्थात् यस्य जातकस्य जन्मकुण्डल्यां यः सूर्यादिग्रहः प्रव्रज्याकारको भवेत् तत्ग्रहप्रभाववशात् स जातकः प्रव्राजकः तपस्वी कीदृशः स्यात्? कथं सः स्वप्रव्रज्यां पालयेत्? कं देवम् आराधयेत्? कुत्र कथं वा निवसेत्? इत्येतत् समस्तं ग्रहाधारितं प्रव्रजितजीवनस्वरूपं अधोलिखितैः श्लोकैः निर्धार्यते।

अत्र सर्वप्रथमं प्रव्रज्याकारकग्रहाणां फलं तु सूर्यादेव आरम्भ्यते पादोन श्लोकेऽस्मिन्–

### २०.८.१ प्रव्रज्याकारकसूर्यस्य फलम्

**अग्नीनां परिचारका गिरिनदीतीराश्रमे तापसाः**
**सूर्याराधनतत्परा गणपतेर्भक्ता उमायाश्च ये।**
**गायत्रीं जपतां वने नियमिनां गङ्गाभिषेकार्थिनां**
**कौमारव्रतमिच्छतामधिपतिस्तेषां सदा भास्करः॥**

**पदच्छेदः –** अग्नीनां परिचारका गिरि नदी तीर आश्रमे तापसाः सूर्य आराधन तत्परा गणपतेः भक्ता उमायाः च ये गायत्रीं जपतां वने नियमिनां गङ्गाभिषेक अर्थिनां कौमार व्रतम् इच्छताम् अधिपतिः तेषां सदा भास्करः।

**अन्वयः –** गिरिनदीतीराश्रमे अग्नीनां परिचारकाः सूर्याराधनतत्परा गणपतेः उमायाश्च ये भक्ताः तापसा तेषां वने गायत्रीं जपतां नियमिनां गङ्गाभिषेकार्थिनां कौमारव्रतमिच्छतां सदा भास्करः अधिपतिः भवति।

**प्रतिपदार्थः –** गिरिनदीतीराश्रमे=पर्वते नदीतीरे वा आश्रमं निर्मीय तस्मिन्, अग्नीनां=वह्नीनां (अग्नीनां सेवनरताः), परिचारकाः= सेवनरताः, सूर्याराधनतत्पराः=सूर्योपासनरताः, गणपतेः=प्रथमपूज्यस्य गणेशस्य, उमायाश्च=पार्वत्याश्च, ये= जातकाः, भक्ताः=तत्प्रीत्यासक्ताः शरणागताः, तापसाः = तपस्विनः, तेषां=जनानां (भक्तानां), वने=अरण्ये, गायत्री=गायत्रीदेवीं,

जपतां=तद्ध्यानपुरस्सरं गायत्रीमन्त्रजापरतानां, नियमिनां=नियमरतां, गङ्गाभिषेकार्थिनां=गङ्गायां स्नात्वा तज्जलेन भगवत्याः गङ्गायाः अभिषेचनं कर्तुं ये वाञ्छन्ति तेषां, कौमारव्रतमिच्छतां = ब्रह्मचर्यव्रतपालकेच्छूनां, भास्करः=सूर्यः, अधिपतिः=स्वामी।

**भावार्थः –** वस्तुतः यदा यस्य कस्यचिदपि जातकस्य जन्माङ्गचक्रे प्रव्रज्याकारकः ग्रहः सूर्यः भवेत्तदा सः पर्वते नदीतटे वा स्वकीयम्–आश्रमं संस्थाप्य अग्निरतः, सूर्योपासकः, गणपतेः उमायाश्च भक्तः, अरण्ये गायत्रीमन्त्रसाधकः, विधिपूर्वकेन नियमेन च गङ्गायां स्नानरतः गङ्गाजलेनाभिषेचनकर्मणि रतः, ब्रह्मचर्यव्रतधारकः क्रौमारव्रतपालकश्च भवत्येव।

### २०.८.२ प्रव्रज्याकारकचन्द्रस्य फलम्

प्रव्रज्याकारकसूर्यग्रहस्य फलादनन्तरं चन्द्रस्य प्रव्रज्याकारकग्रहस्य फलमपि आचार्य– श्रीमत्कल्याणवर्मणा स्वकीये सारावलीग्रन्थे निर्दिष्टम्–

**वृद्धश्रावकभस्मधूलिधवलाः शैवव्रते ये स्थिता**
**बाह्याः पातकितां गता भगवतीभक्ताश्च निःसङ्गिनः।**
**सिद्धान्ते खलु सोमनाम्नि निरताः कापालिका निष्ठुरा–**
**स्तेषां नायकतां गतः शशधरः खट्वाङ्गपाणिद्युतिः॥**

**पदच्छेदः –** वृद्ध श्रावक भस्म धूलि धवलाः शैवव्रते ये स्थिता बाह्याः पातकितां गता भगवती भक्ता च निःसङ्गिनः सिद्धान्ते खलु सोमनाम्नि निरताः कापालिका निष्ठुराः तेषां नायकतां गतः शशधरः खटवाङ्ग पाणि द्युतिः।

**अन्वयः –** वृद्धश्रावकभस्मधूलिधवलाः ये शैवव्रते स्थिताः (ये) च बाह्याः पातकितां गता भगवतीभक्ताः निसङ्गिनः सोमनाम्नि सिद्धान्ते (च ये) खलु निरताः निष्ठुराः कापालिकाः तेषां खट्वाङ्गपाणिद्युतिः शशधरः नायकतां गतः।

**प्रतिपदार्थः –** वृद्धश्रावकभस्मधूलिधवलाः = वृद्धाः ये श्रावकाः (जैनमुनयः वा) तपस्विनः कापालिका वा ये भस्मधूलिना धवलिताः स्वच्छाः भवन्ति ते, शैवव्रते = एकादशरुद्रव्रते (शिवस्य व्रतधारणे), स्थिताः = अवस्थिताः, ये = जातकाः (व्रतधारकाः), बाह्याः = समाजात् बहिष्कृताः, पातकितां गता = पतिताः, भगवतीभक्ताः = देवीभक्ताः, निसङ्गिनः = एकान्तवासिनः, सोमनाम्नि = सोम–सिद्धान्ते रताः, खलु = निश्चयेन, निरताः = आसक्ताः, निष्ठुराः = कठोराः, कापालिकाः = नरमुण्डधारकाः, तेषां = संन्यासीनां, खट्वाङ्गपाणिद्युतिः = शशधरः = चन्द्रः, नायकतां = अधिपतित्वं, गतः = यातः।

**भावार्थः –** यदि यस्य कस्यापि जातकस्य जन्माङ्गचक्रे चन्द्रः प्रव्रज्याकारकः स्यात्तर्हि जातकाः वृद्धतपस्वी, नरमुण्डधारकः, भस्मधारकः, शिवस्य व्रतपालकः, समाजपतितः देवीभक्तः, एकान्तवासी, सोम–सिद्धान्ते रतः, निष्ठुरः, कापलिको वा भवति।

### २०.८.३ मङ्गलः

श्रीमत्कल्याणवर्मणा सारावलीग्रन्थे भौमस्य प्रव्रज्याकारकग्रहवशादेव फलं किमिति श्लोकेऽस्मिन् निर्दिष्टम्–

**उपासका बुद्धसमाश्रयं गताः**
**शिखां विना पाण्डरभिक्षवश्च ये।**
**सुवाससो रक्तपटा जितेन्द्रियाः**
**प्रभुः सदैषां क्षितिजः प्रकीर्तितः॥**

**पदच्छेदः –** उपासका बुद्ध सम आश्रयं गताः शिखां विना पाण्डर भिक्षवः च ये सुवाससः रक्तपटा जितेन्द्रियाः प्रभुः सदैषां क्षितिजः प्रकीर्तितः।

**अन्वयः –** बुद्धसमाश्रयं गताः उपासकाः ये च शिखां विना पाण्डरभिक्षवः सुवाससः रक्तपटा जितेन्द्रियः सदा एषां प्रभुः क्षितिजः प्रकीर्तितः।

**प्रतिपदार्थः –** बुद्धसमाश्रयं=बौद्धधर्मासक्ताः, गताः=प्राप्ताः, उपासकाः=धर्मरताः (आसक्ताः), ये=जातकाः, शिखां=शीर्षे शिखा ('चोटी' इति हिन्दीभाषायाम्), विना=रहिता, पाण्डरभिक्षवः=श्वेताम्बरधारकाः भिक्षवः, सुवाससः=समीचीनवस्त्रधारकाः, रक्तपटाः=रक्तवर्णयुताः वस्त्रधारकाः शक्याः बौद्धाः, जितेन्द्रियाः=इन्द्रियजितः (संयमितः), सदा=नियतमेव, एषां=प्रव्राजकानां, प्रभुः=ईश्वरः (प्रव्रज्याकारकः), क्षितिजः=भूमिजः (मङ्गलः), प्रकीर्तितः=वर्णितः।

**भावार्थः –** आकाशमण्डले विचरणमानेषु सूर्यादिसप्तग्रहेषु भौमस्तु मङ्गलः अङ्गारकः नायकः अग्रणी अत्युत्साही ओजस्वी सत्त्वसम्पन्नः ग्रहः कथ्यते। प्रव्रज्यायोगकारकस्य भौमग्रहस्य वशादेव फलं किम् अर्थात् कीदृशः प्रव्राजको भवति इति जिज्ञासायाम् अस्मिन् श्लोके आचार्येण प्रतिपादितम्। अर्थात् यदा यस्य जातकस्य जन्मकुण्डल्यां भौमः प्रव्रज्याकारकः ग्रहः भवेत्तदा जातकः बौद्धधर्मोपासकः, शिखाविरहितः, श्वेतवस्त्रधारकः भिक्षुः, सम्यक् वस्त्रधारकः, रक्तवस्त्र- धारकः, जितेन्द्रियः, संयमितो भवति।

मङ्गलः सत्त्वसम्पन्नः, अत्युत्साही, युवा, पराक्रमी भवति अतः परम्पराम् अतिरिच्य नूतनविचाराणां पालकः नवदिशोन्मलने नेतृत्वं करोति अत एव अयं वक्र इत्यपि उच्यते। अनेनैव हेतुना मङ्गलेन उत्पादिते प्रव्रज्यायोगे जातकः सनातनपरम्परामतिरिच्य बौद्ध-जैनप्रभृतिनवां दर्शनकरणिं स्वीकरोति। अतः भौम प्रभाविताः प्रव्राजकाः प्रयः बौद्धभिक्षवाः जिनभिक्षवः लोकायतिकाः नव-नवमतावलम्बिनो भवन्ति।

### २०.८.४ बुधः

सूर्यादिसप्तग्रहेषु बुधग्रहः कुमार अर्थात् राजकुमारः वर्तते। तत्र प्रव्रज्याकारकेषु सूर्यादिग्रहेषु फलकथनसन्दर्भे बुधः यदि प्रव्रज्याकारकः स्यात्तर्हि तस्य फलं किमिति आचार्येण श्रीमत्कल्याणवर्मणा स्वकीये सारावलीग्रन्थे श्लोकेऽस्मिन् एवं प्रतिपादितम्–

**आजीविनां कुहकिनां समयाधिका ये**
**ये दीक्षितास्तनुभृतः खलु गारुडे च।**
**तन्त्रे मयूरपिशिताशनयोश्च युक्ता-**
**स्तेषां शशाङ्कतनयोऽधिपतिर्निरुक्तः॥**

**पदच्छेदः –** आजीविनां कुहकिनां समयाधिका ये, ये दीक्षिताः तनु भृतः खलु गारुडे च तन्त्रे मयूर पिशिता शनयो च युक्ताः तेषां शशाङ्कतनयः अधिपतिः निरुक्तः।

**अन्वयः –** ये समयाधिकाः कुहकिनां आजीविनाम् तनुभृतः, ये च खलु गारुडे दीक्षिताः (ये च) मयूरपिशिताशनयोः च तन्त्रे युक्ताः तेषां अधिपतिः शशाङ्कतनयः निरुक्तः।

**प्रतिपदार्थः –** ये = जातकाः, समयाधिकाः = कालबहुलता, कुहकिनां = मर्कटक्रीडाकारः (नटः, हिन्दी- भाषयां 'मदारी'), आजीविनां = नटादिकर्मणा स्वजीवनयापने रतानां, तनुभृतः = शरीरधारिणः मानवाः, ये = जातकाः, खलु = निश्चयेन, गारुडे = गरुडस्योपासकाः, दीक्षिताः = पारङ्गताः, मयूरपिशिताशनयो = मयूरराक्षसयोः, तन्त्रे = तान्त्रिके (ऐन्द्रजालिके), युक्ताः = संयुक्ताः, तेषां = अधिपतिः = नायकः (स्वामी), शशाङ्कतनयः = बुधः (चन्द्रपुत्रः), निरुक्तः=प्रोक्तः।

**भावार्थः –** यस्य जातकस्य जन्मकुण्डल्यां यदा बुधः प्रव्रज्याकारकः भवेत्तदा जातकः समयवशादेव मर्कटकर्मकरः, नटादिषु च कर्मसु आजीविकारतः, गरुडोपासकः, मयूर-राक्षस-तन्त्रादिषु विद्यासु पारङ्गतः, ऐन्द्रजालिकः भवति। सारावलीग्रन्थकारेण आचार्यकल्याणवर्मणा प्रव्रज्याकारक- ग्रहाणां फलं निर्दिष्टम्। यतो हि बुधग्रहस्य प्रव्रज्याकारकस्य फलं वर्णितम् आचार्येण।

## २०.८.५ गुरुः

सूर्यादीनां ग्रहाणां सचिवः मन्त्री वा गुरुः वर्तते। तत्र प्रव्रज्याकारकेषु सूर्यादिषु सप्तषु ग्रहेषु सम्प्रति बृहस्पतेः प्रव्रज्याकारक फलं दैवज्ञेन श्रीमत्कल्याणवर्मणा स्वकीये ग्रन्थे पादोन अस्मिन् श्लोके एवं निर्दिष्टम्–

**एकं त्रीनथवा वहन्ति मुनयो दण्डान् कषायाम्बराः**
**वानप्रस्थमुपागताः फलपयोभक्षाश्च ये भिक्षवः।**
**गार्हस्थ्येन तु संस्थिता नियमिनः सद्ब्रह्मचर्यं गता-**
**स्तेषां दण्डपतिः सुरेन्द्रसचिवस्तीर्थेषु ये स्नातकाः॥**

**पदच्छेदः –** एकं त्रीन् अथवा वहन्ति मुनयो दण्डान् कषाय-अम्बराः वानप्रस्थम् उपागताः फलपयोभक्षाः ये भिक्षवः गार्हस्थ्येन तु संस्थिता नियमिनः सद्ब्रह्मचर्यं गताः तेषां दण्डपतिः सुरेन्द्र सचिवः तीर्थेषु ये स्नातकाः।

**अन्वयः –** सुरेन्द्रसचिवः एकं अथवा त्रीन् कषायाम्बराः दण्डान् मुनयः वहन्ति, ये वानप्रस्थमुपागताः फलपयोभक्षाः भिक्षवः च (वहन्ति), ये गार्हस्थेन नियमिनः संस्थिताः सदब्रह्मचर्यं गताः, दण्डपतिः, तीर्थेषु स्नातकाः (वहन्ति)।

**प्रतिपदार्थः –** सुरेन्द्रसचिवः = देवगुरुः (बृहस्पतिः), एकं = एकसंख्यकम्, अथवा = वा, त्रीन् = त्रीणि (दण्डानि), कषायाम्बराः = रक्तवर्णवस्त्रधारकाः, दण्डान् = दण्डधारकान्, मुनयः = ऋषयः, वहन्ति = निर्वहन्ति, ये = जातकाः, वानप्रस्थमुपागताः = वानप्रस्थाश्रमगताः, फलपयोभक्षाः = फलदुग्धयोः भक्षकाः, भिक्षवः = याचकाः, गार्हस्थेन = गृहस्थधर्मपालकेन, नियमिनः = नियमपूर्वकेन स्वजीवनयापने ये रताः, संस्थिताः = व्यवस्थिताः, सद्ब्रह्मचर्यं = सद्कौमारव्रतं, गताः = प्राप्ताः, दण्डपतिः = दण्डी स्वामी (तपस्वी), तीर्थेषु = पवित्रेषु तीर्थदिषु, स्नातकाः।

**भावार्थः –** प्राचीनानाम् ऋषीणां वचनमनुसृत्य श्रीमत्कल्याणवर्मणा सारावलीग्रन्थे प्रव्रज्याकारकगुरोः फलं सम्यक्रूपेण प्रतिपादितम्। अर्थात् यदि यस्य कस्यापि जातकस्य जन्माङ्गचक्रे बृहस्पतिः प्रव्रज्याकारकः स्यात्तर्हि सः जातकः एकदण्डधारकः दण्डद्वयधारको वा वर्तते। पुनः जातकः रक्तवर्णवस्त्रधारकः, कषायाम्बरधारकः, वानप्रस्थाश्रमे संलग्नशीलश्च भवति। एवं प्रकारेण योगेऽस्मिन् समुत्पन्नः जातकः फलदुग्धयोः भक्षकः भिक्षुः भवतीति भवान् पठितवान्। तथा च यः जातकः समुत्पन्नः सः विधिपूर्वकेन गृहस्थाश्रमस्य नियमपालकः, कौमारव्रतधारकः ब्रह्मचर्यव्रतपालकः, बहुषु तीर्थेषु स्नानरतश्च भवति अर्थात् गृहस्थो भूत्वाऽपि सर्वदा धर्मरतः नियमपालकः तपस्वीवत् भवति।

## २०.८.६ शुक्रः

शुक्रोऽपि ग्रहाणां सचिवः वर्तते। सचिवस्य कार्यं तु नृपस्य मार्गदर्शकत्वेन जायते। सूर्यादिषु ग्रहेषु शुक्रः सौम्यप्रकृतिकः भवति। अत्र प्रव्रज्याकारकग्रहाणां फलप्रसङ्गेऽस्मिन् शुक्रस्य प्रव्रज्याकारकस्य फलं किमिति श्लोके एवं प्रतिपादितम्–

**पाशुपतयज्ञदीक्षाव्रतेषु ते नित्यमेव संयुक्ताः।**
**वैष्णवचरकाणामपि तेषां नेता प्रकीर्तितः शुक्रः॥**

**पदच्छेदः –** पाशुपत यज्ञ दीक्षा व्रतेषु ते नित्यं एव संयुक्ताः वैष्णव चरकाणाम् अपि तेषां नेता प्रकीर्तितः शुक्रः।

**अन्वयः –** (ये) नित्यमेव पाशुपतयज्ञदीक्षाव्रतेषु संयुक्ताः ते वैष्ण-वचरकाणामपि नेता (प्रव्रज्याकारकः) शुक्रः प्रकीर्तितः।

**प्रतिपदार्थः –** शुक्रः = भार्गवः, नित्यमेव = प्रतिदिनं, (ये जातकाः,) पाशुपतयज्ञदीक्षाव्रतेषु = शैवयज्ञे (रुद्रयज्ञे शिवलिङ्गनिर्माणे, रुद्राभिषेके, प्रदोषादिव्रते इत्यादिकर्मसु शिवसम्बन्धिजप-तपादिकर्मसाधनाय शैवसिद्धान्तपालनाय शैवागमकर्मसाधनाय तदनुकूलदीक्षायाञ्च, संयुक्ताः = निरताः, अपि = शिवभक्तिम् अतिरिच्य अर्थात् न केवलं शिवभक्तानां शैवानाम् अपितु, ते = समुद्भवाः, वैष्णवचरकाणां = विष्णुभक्तिरतानाम्, नेता = नायकः (अधिपतिः), प्रकीर्तितः = प्रतिपादितः।

**भावार्थः –** अस्मिन् प्रव्रज्याकारकग्रहाणां फलादेशप्रकरणे विविधेषु जातकग्रन्थेषु विविधानाम् च आचार्याणां मतानुसारैः सारावलीग्रन्थकारेणापि स्वकीये ग्रन्थे प्रव्रज्याकारकग्रहस्य शुक्रस्य फलं सम्यक्रूपेण प्रतिपादितम्। यदा यस्य कस्यापि जातकस्य जन्माङ्गचक्रे शुक्रः प्रव्रज्याकारकः ग्रहः भवेत्तदा सः जातकः प्रतिदिनं नियमपूर्वकेन शिवस्य आराधनायां रतः अर्थात् शिवभक्तः शैवो वा, शिवप्रसादप्राप्तये तत्सम्बन्धियज्ञे दीक्षितः, व्रतपालकः विष्णु-भक्तिरतः, भगवतः विष्णोः प्रसादाय तदर्चन-पूजन-हवन-जपादिकर्मणि रतः तदाराधन-श्रवण-मनन-चिन्तनादिषु संलग्नः तत्परो भवति।

### २८.८.७ शनिः

सूर्यात्शुक्रादीनां प्रव्रज्याकारकग्रहादीनां फलनिर्देशादनन्तरं सम्प्रति सारावली-ग्रन्थकारेण श्रीमत्कल्याणवर्मणा स्वकीये सारावलीग्रन्थे शनेः फलमपि सम्यक्तया प्रतिपादितः।

प्रव्रज्याकारकस्य शनेः फलं किमिति जिज्ञासायाम् अस्मिन् श्लोके एवं विहितम्–

**पाषण्डव्रतनिरता दिगम्बरा भिक्षवो ये स्थिता।**
**तेषामधिपतिरर्किः शावकतरुमूलिनश्च दुस्तपसः॥**

**पदच्छेदः –** पाषण्ड व्रत निरता दिगम्बरा भिक्षवः ये स्थिता तेषाम् अधिपतिः आर्किः शावक तरु मूलिनः दुःतपसः।

**अन्वयः –** अर्किः पाषण्डव्रतनिरता दिगम्बरा ये भिक्षवः स्थिता दुस्तपसः शावकतरुमूलिनश्च अधिपतिः (भवति)।

**प्रतिपदार्थः –** अर्किः = शनिः, पाषण्डव्रतनिरता = मिथ्याभाषणरताः, दिगम्बरा = नग्नाः, ये = जातकाः, भिक्षवः = याचकाः, स्थिता = अवस्थिता, दुस्तपसः = शावकतरुमूलिनश्च = लघुपादपस्य अधोभागे, अधिपतिः = स्वामी।

**भावार्थः –** यस्य कस्यापि जातकस्य जन्मकुण्डल्यां प्रव्रज्याकारकः शनिग्रहः भवेत्तदा सः जातकः मिथ्या-भाषण-दण्ड-पाषण्डव्रतपालकः, नग्नः अर्थात् दिगम्बरः, लघुपादपस्य अधोभागे दुस्तपसरतश्च भवतीति भवद्भिः ज्ञातम्।

**बोधप्रश्नाः**

११. 'कौमारव्रतम्' शब्दस्य कोऽर्थः?

१२. जातकः शैवव्रतधारकः कदा भवति?

१३. जातकः कस्मिन् योगे बौद्धधर्मोपासकः भवति?

१४. कस्मिन् योगे जातकः गरुडोपासकः भवति?

१५. दिगम्बरस्य जातकस्य जन्म कस्मिन् योगे भवति?

## २०.९ सारांशः

पाठेस्मिन् सर्वप्रथमं प्रव्रज्याभङ्गयोगः भवता पठितः। प्रव्रज्यायोगस्य परिहार एव प्रव्रज्याभङ्गनाम्नैव ज्ञायते। तत्र प्रव्रज्याकारकग्रहः सर्वैः ग्रहैः पराजितः भवेत्तदा प्रव्रज्यायाः परिहारः भवति। परन्तु यदि प्रव्रज्याकारकः ग्रहः सूर्यस्य सानिध्ये स्यात्तदा जातकः संन्यासयोगे आसक्तः भवति। प्रव्रज्याकारकग्रहाः अधिकाः स्युस्तदा नैका प्रव्रज्यायोग भवन्ति। पुनः प्रव्रज्याकारकग्रहः अस्त भवेत् अन्यैः ग्रहैः दृष्टः स्यात्तदा जातक गृहे एव संन्यासयोगस्य इच्छा जनयति, परन्तु संन्यासयोगः नैव धारयतीति यवनाचार्यमतैः पठिताः।

भाग्यहीनप्रव्रज्यायोगस्य ज्ञानमपि भवद्भिः कृताः। यस्य जातकस्य जन्माङ्गे जन्मराशीशः निर्बलतवं प्राप्य केन्द्रस्थं शनिं पश्यति तदा जातकः भाग्वविरहितः प्रव्रज्यां धारयति। तदनन्तरं नृपसंन्यासयोगः वर्णितः। चन्द्रः शुभग्रहाणां नवांशे स्थित्वा दशमभावे भवेत्, अन्ये ग्रहाः स्वोच्चराश्यः स्युः, एतेषां समेषां ग्रहोपरि शनेर्दृष्टिः भवेत्तदा जातकः नृप-संन्यासी भवति। एवं प्रकारेण दुःखितं संन्यासयोगमपि ग्रन्थकारेण निर्दिष्टः। पूर्णबली चन्द्रस्य दृष्टिः निर्बलस्य लग्नेशस्योपरि भवेत्तदा योगेस्मिन् समुत्पन्नः जातकः निर्धनः, जनरहितः, शोकसंतप्तश्च तापसयोगं जनयति। तदनन्तरं प्रव्रज्याकारकग्रहाणां फलमपि आचार्येण श्रीमत्कल्याणवर्मणा स्वकीये सारावलीग्रन्थे प्रतिपादितः विषयेऽस्मिन्नपि भवद्भिः सम्यक्रूपेण पठिताः।

## २०.१० शब्दावली

| | | | |
|---|---|---|---|
| १. | ग्रहेन्द्रः | = | सूर्यैः। |
| २. | सौरिं | = | शनिं। |
| ३. | कुमुदसुबन्धुं | = | |
| ४. | सौम्यभागे | = | शुक्लभागे (शुक्लपक्षे)। |
| ५. | वियति | = | आकाशे (दशमे भागे)। |
| ६. | शीतगुः | = | चन्द्रः। |
| ७. | कृच्छ्र | = | कष्टः। |
| ८. | लब्धः | = | प्राप्तः। |
| ९. | भुवननाथः | = | पृथ्वीनाथः। |
| १०. | कुम्भांशेषु | = | कुम्भनवांशेषु। |
| ११. | एकर्क्षगतैः | = | एकराशिस्थैः। |

| | | | |
|---|---|---|---|
| १२. | पुरातनैः | = | प्राचीनैः। |
| १३. | गिरि | = | पर्वतः। |
| १४. | कौमारव्रतं | = | ब्रह्मचर्यव्रतम्। |
| १५. | वृद्धश्रावकः | = | वृद्धतपस्वी। |
| १६. | धूलिः | = | रजकणाः। |
| १७. | भिक्षवः | = | याचकाः। |
| १८. | सुरेन्द्रसचिवः | = | बृहस्पतिः। |
| १९. | शावकः | = | लघुः। |
| २०. | तरुः | = | वृक्षः। |

## २०.११ सन्दर्भग्रन्थः

१. सारावली–श्रीमत्कल्याणवर्मविचरचिता, व्याख्याकारः–डॉ. मुरलीधरचतुर्वेदी, मोतीलालबनारसीदास, दिल्ली।

२. जातकपारिजातः–वैद्यनाथविरचितः, व्याख्याकर–कपिलेश्वरशास्त्री, चौखम्भा संस्कृत संस्थान, वाराणसी।

३. बृहज्जाकम्–वरामिहिरविरचितम्, व्याख्याकारः–पं. केदारदत्त जोशी, मोती–लालबनारसीदास, दिल्ली।

## २०.१२ सहायकग्रन्थः

१. जातकपारिजातः–वैद्यनाथविरचितः, व्याख्याकर–कपिलेश्वरशास्त्री, चौखम्भा संस्कृत संस्थान, वाराणसी।

२. लघुजातकम्–दैवज्ञवराहमिहिरविरचितम्, व्याख्याकारः–कमलाकान्तपाण्डेय, चौखम्भा सुरभारती प्रकाशन, वाराणसी।

३. बृहज्जाकम्–वरामिहिरविरचितम्, व्याख्याकारः–पं. केदारदत्त जोशी, मोती–लालबनारसीदास, दिल्ली।

## २०.१३ बोधप्रश्नोत्तराणि

१. संन्यासयोगः तपस्वीयोगो वा प्रव्रज्यायोगः भवति।

२. सूर्यः।

३. शनिः।

४. प्रव्रज्याभङ्गयोगः।

५. जन्मराशीशः एव ग्रहः।

६. आकाशः दशमभावः वा।

७. चन्द्रः ।

८. शनिः ।

९. शुक्लपक्षे ।

१०. सूर्यः प्रव्रज्याकारकः ग्रहः भवेत् ।

११. ब्रह्मचर्यव्रतम् ।

१२. यदा प्रव्रज्याकारकः ग्रहः चन्द्र भवेत् ।

१३. यदा भोम प्रव्रज्याकारक भवेत् ।

१४. बुधः प्रव्रज्याकारको स्यात् ।

१५. यदा प्रव्रज्याकारकः शनिः भवेत् ।

## २०.१४ अभ्यासप्रश्नाः

१. सश्लोकं प्रव्रज्याभङ्गयोगं विवेचयत।

२. भाग्यहीनप्रव्रज्यायोगं स्पष्टयत।

३. नृपसंन्यासयोगं सश्लोकं विलिख्य व्याख्यां करोतु।

४. प्रव्रज्याकारकस्य सूर्यस्य फलं प्रतिपादयत।

५. सश्लोकं बुधस्य फलं विलिखत।

६. प्रव्रज्याकारकशुक्रस्य फलं विवेचयत।



# एकविंशः पाठः - नाभसयोगः ( प्रथमः )

## पाठसंरचना



## २१.१ प्रस्तावना

पाठेऽस्मिन् भवतः स्वागतम् अस्ति। होराशास्त्रस्य अध्ययनपरम्परायां पूर्वस्मिन् पाठे प्रव्रज्याभङ्गयोगाः भवता सम्यक्रूपेण पठिताः। तत्र विशिष्टप्रव्रज्यायोगः, भाग्यहीनप्रव्रज्यायोगः, नृपसंन्यासयोगः दुःखितः संन्यासयोगः इति विविधप्रव्रज्यायोगाः वर्णिता आसन्। तैः योगैः सह प्रव्रज्याकारकाणां तेषां ग्रहाणां प्रतिपादितफलमपि भवान् ज्ञातवान्। तदनन्तरम् अस्मिन् पाठे नाभसयोगानां ज्ञानं प्राप्स्यति। द्वात्रिंशन्नाभसयोगेषु त्रीन् आश्रययोगान् भवान् पठिष्यति। तथा च रज्जुयोग-मुसलयोग-नलयोगानाञ्च ज्ञानं प्राप्स्यति। नाभसयोगसन्दर्भे मालासर्पयोः द्वयोः दलयोगयोः ज्ञानमपि सम्यक्रूपेण भवान् प्राप्स्यति। तस्मात् सप्तसंख्यायोगानां वर्णनं क्रियते। तेषु सप्तसंख्यायोगेष्वपि गोलयोगम्, युगयोगम्, शूलयोगम्, केदारयोगम्, पाशयोगम्, दामिनीयोगम्

एवं वीणायोगं सम्यक्रूपेण पठिष्यति। एवं प्रकारेण पूर्वोक्तानां समेषां नाभसयोगानां फलसन्दर्भेऽपि सम्यग्ज्ञानं प्राप्स्यति।

## २१.२ उद्देश्यम्

अस्य पाठस्य अध्ययनेन भवान्-

- द्वात्रिंशन्नाभसयोगानां निरूपणे समर्थः भविष्यति।
- आश्रययोगानां निर्धारणे सक्षमः भविष्यति।
- मालासर्पयोः द्वयोः दलयोगयोः प्रतिपादनकुशलो भविष्यति।
- सप्तसंख्यायोगानां विषये ज्ञात्वा अन्यान् छात्रान् अपि बोधयितुं पटुः भविष्यति।

## २१.३ द्वात्रिंशन्नाभसयोगाः

अत्र नाभसयोगः किमिति जिज्ञासायाम् उच्यते नभसि भव इति नाभसः। नभोमण्डले संचरणशीलानां ग्रहाणां स्थितिः जन्मकुण्डल्यां जन्मसमये कीदृशी भवतीति विचारः अस्माभिः करणीयः। वस्तुतः यवनाचार्यैः अष्टादशशतप्रकारकाः (१८००) नाभसयोगा उक्ताः किन्तु संक्षेपेण एतेषां समावेशः द्वात्रिंशत्सु नाभसयोगेषु भवति अतः भारतीयज्योतिर्विद्भिः वराहमिहिर-कल्याणवर्मप्रभृतिभिः तु द्वात्रिंशन्नाभसयोगा एव वर्णिताः। एतेषां नाभसयोगानां चत्वारः प्रभेदाः सन्ति। **१.** आश्रययोगाः त्रयः **२.** दलयोगद्वयम् **३.** सप्तसंख्यायोगाः **४.** विंशतिराकृतियोगाः। एतेषु आकृति-संख्यायोगौ सम्भूय सप्तविंशतिः (**२७**) आकृति-संख्या-आश्रययोगाः मिलित्वा त्रिंशत् (**३०**) एवं दलयोगेन सह आहत्य द्वात्रिंशत् (**३२**) भवन्ति। एतेषु योगेषु केचन राजयोगाः केचन अराजयोगाः वर्तन्ते। अत्राचार्येण अस्मिन् श्लोके नाभसयोगाः किमिति जिज्ञासायाम् -

**नौच्छत्रकूटकार्मुकशृङ्गाटकवज्रदामिनीपाशाः।**
**वीणासरोजमुसला वापीहलशरसमुद्रचक्राणि॥**

**माला सर्पार्धेन्दू यवकेदारौ गदाविहगयूपाः।**
**युगशकटशूलदण्डा रज्जुः शक्तिस्तथा नलो गोलः॥**

**सचराचरस्य जगतो योगैरेभिः प्रकीर्त्यते प्रसवः।**

**पदच्छेदः –** नौ छत्र कूट कार्मुक शृङ्गाटक वज्र दामिनी पाशाः वीणा सरोज मुसला वापी हल शर समुद्र चक्राणि माला सर्प अर्धेन्दू यव-केदारौ गदा विहग यूपाः युग शकट शूल दण्डा रज्जुः शक्तिः तथा नलः गोलः सचराचरस्य जगतः योगैः एभिः प्रकीर्त्यते प्रसवः।

**अन्वयः –** नौच्छत्रकूटकार्मुकशृङ्गाटकवज्रदामिनीपाशाः गदाविहगयूपाः वीणासरोजमुसला युगशकटशूलदण्डा वापीहलशरसमुद्राणि माला सर्पार्धेन्दू यवकेदारौ तथा गोलः नलः रज्जुः शक्तिः एभि योगैः सचराचरस्य जगतः प्रसवः।

**प्रतिपदार्थः –** नौ = नौकायोगः, छत्र = छत्रयोगः, कूट = कूटयोगः, कार्मुक = कार्मुकयोगः (धनुर्योगः), शृङ्गाटक = शृङ्गाटकयोगः, वज्रः = वज्रयोगः (इन्द्रायुधः), दामिनी = दामनीयोगविशेषः, पाशाः = पाशयोगः, वीणा = वीणायोगः, वापीयोगः (कूपतडागादयः), हल = हलयोगः, शर = शरयोगः, समुद्र= समुद्रयोगः, चक्राणि = चक्रयोगः, माला = मालायोगः, सर्प = सर्पयोगः (भुजङ्गः), अर्धेन्दु = अर्धचन्द्रयोगः, यव = यवयोगः, केदार =

केदारयोगः, गदा = गदायोगः, विहग = विहगयोगः (खगयोगः), यूपाः = यूपयोगः, युग= युगयोगः, शकट = शकटयोगः, शूल = शूलयोगः, दण्ड = दण्डयोगः, रज्जुः = रज्जुयोगः, शक्तिः = शक्तियोगः, नलः = नलयोगः, गोलयोगः, जगतः संसारस्य, प्रसवः = जन्म प्रकीर्त्यते = कथ्यते।।

**भावार्थः –** तत्र सारावलीग्रन्थे आचार्यश्रीमत्कल्याणवर्मणा निर्दिष्टमस्ति यत् द्वात्रिंशत्नाभसयोगेषु नौकायोग–कूट–छत्र–धनु–शृङ्गाटक–वज्र–दामिनी–पाश–वीणा–मुसल–वापी–हल–शर–समुद्र–चक्र–माला–सर्प–अर्धचन्द्र–यव–केदार–गदा–पक्षी–यूप–युग–शकट–शूल–दण्ड–रज्जु–शक्ति–नल– गोलादयः योगाः भवन्ति। अर्थात् एतेषु द्वात्रिंशन्नाभसयोगेषु सम्पूर्णचराचरस्य जन्म प्रभवति। अर्थात् प्रत्येकं जातकस्य जन्माङ्गचक्रे एतेष्वेव नाभसयोगेषु अन्यतमः कश्चन अवश्यमेव सम्भाव्यते। माणित्थादिभिः आचार्यैः ये द्वात्रिंशत्संख्याकाः नाभसयोगाः वर्णिताः तेषु त्रयः आश्रययोगाः –

1. रज्जुयोगः **२.** मुलसयोगः **३.** नलयोगः

द्वौ दलयोगौ–

**४.** मालायोगः **५.** सर्पयोगः

सप्तसंख्यायेगाः–

**६.** गोलयोगः **७.** युगयोगः **८.** शरलयोगः **९.** केदारयोगः **१०.** पाशयोगः **११.** दामिनीयोगः **१२.** वीणायोगः

एवं विंशतिः आकृतियोगः–

**१३.** गदायोगः **१४.** शकटयोगः **१५.** विहगयोगः **१६.** शृङ्गारकयोगः **१७.** हलयोगः **१८.** वज्रयोगः **१९.** यवयोगः **२०.** कमलयोगः **२१.** वापीयोगः **२२.** यूपयोगः **२३.** शरयोगः **२४.** शक्तियोगः **२५.** दणुयोगः **२६.** नौकायोगः **२७.** कूटयोगः **२८.** छलयोगः **२९.** चापयोगः **३०.** अर्द्धचन्द्रयोगः **३१.** समुद्रयोगः **३२.** चक्रयोगश्च वर्तन्ते।

## २१.४ आश्रययोगाः

तत्र द्वात्रिंशन्नाभसयोगेषु सर्वप्रथमं त्रयाणाम् आश्रययोगानां प्रतिपादनं दैवज्ञेन सम्यक्रूपेण कृतम्। आचार्येण श्रीमत्कल्याणवर्मणा स्वकीये सारावलीग्रन्थेऽपि रज्जु–मुसल–नलादीनाम् आश्रयादीनां योगानां नामोल्लेख आदौ कृतः।

**आश्रयजातान् प्राहुर्माणित्था मुसलरज्जुनलयोगान्।।**

**पदच्छेदः –** आश्रयजातान् प्राहुः माणित्था मुसल–रज्जु–नलयोगान्।

**अन्वयः –** मुसलरज्जुनलयोगान् आश्रयजातान् माणित्था प्राहुः।

**प्रतिपदार्थः –** माणित्था = माणित्थादिदैवज्ञाः, आश्रयजातान् = आश्रयादिजातान्, मुसल–रज्जुनलयोगान् = मुसल–रज्जु–नलयोगान्, प्राहुः = कथितवन्तः।

त्रयाः आश्रययोगाः भवन्ति। अत्र सर्वप्रथमं रज्जुयोगः दैवज्ञेन प्रतिपादितः –

कल्याणवर्मा स्वग्रन्थे आश्रयादियोगानां सुव्यवस्थितक्रमेण (अर्थात् प्रत्येकं योगविशेषस्य लक्षणफलनिरूपणमेकत्रैव) न कृतः। तदपेक्षया तेन आदौ समेषां योगानां नाग्रहणं कृतं ततः परं तेषां क्रमशः फलनिरूपणं तस्मात् आकृत्यादियोगादारभ्य तेषां लक्षणानि उपस्थापितानि।

अतः भवतः सगुमतया ज्ञानाय अत्र कल्याणवर्मणः योगकथनक्रमः न अनुपाल्यते। तदपेक्षया चतुर्णामपि आश्रय-दलादीनां सकलविचारः अर्थात् तेषां लक्ष्मण-फलकथनम् (तत्तद्योगमाश्रित्य एकत्रैव क्रियते) आश्रययोगानां लक्षणं कल्याणवर्मा एवं निगदति–

**उभयस्थिरचरसंस्थैः सर्वैर्नलमुसलरज्जवः क्रमशः।**

**पदच्छेदः –** उभय स्थिर चर संस्थैः सर्वैः नल मुसल रज्जवः क्रमशः।

**अन्वयः –** उभयस्थिरचरसंस्थैः सर्वैः क्रमशः नल-मुसल-रज्जव (भवन्ति)।

**प्रतिपदार्थः –** उभयस्थिरचरसंस्थैः = उभयश्च स्थिरश्च चरश्च इति उभयस्थिरचराः अर्थात् द्विस्वभाव-चर-स्थिरराशयस्तेषु संस्थैः स्थितैः, सर्वैः = सूर्यादिग्रहैः, क्रमशः = यथाभिहितक्रमेण, नल-मुसल-रज्जवः = नलयोगः मुसलयोगः रज्जुयोगश्च (भवन्ति)।

**भावार्थः –** यदा सर्वे सूर्यादयो ग्रहाः द्विस्वभावराशिषु अर्थात् मिथुन-कन्या-धनु-मीनराशिषु भवेयुः तदा 'नल' नामकः आश्रययोगो भवति। यदा सर्वे सूर्यादयो ग्रहाः स्थिरराशिषु अर्थात् वृष-सिंह-वृश्चिक-कुम्भराशिषु भवेयुः तदा मुसल-नामकः आश्रययोगो जायते।

### २१.४.१ रज्जुयोगः

यदा यस्य जातकस्य जन्माङ्गचक्रे सर्वेषां शुभाशुभग्रहाणां स्थितिः चरराशौ भवेत्तदा भवति रज्जुयोगः।

एवं यदा सर्वे ग्रहाः चरराशिषु अर्थात् मेष-कर्क-तुला-मकरराशिषु स्युस्तदा रज्जुनामकः आश्रययोगो भवति।




**( रज्जुयोगः )**

### २१.४.२ मुसलयोगः

यदा यस्य कस्यापि जातकस्य जन्मकुण्डल्यां स्थिरराशौ सर्वे ग्रहाः स्युस्तदा मुसलयोगः भवति।




**( मुसलयोग: )**

### २१.४.३ नलयोग:

यस्य जातकस्य जन्माङ्गचक्रे सर्वेषां ग्रहाणां स्थिति: द्विस्वभावराशौ स्यात्तदा योगोऽयं नलयोगकारक: भवति।




**( नलयोग: )**

उदाहरणे प्रदर्शिता: रज्वादियोगा: केवलं निदर्शनार्थमेव। अर्थात् रज्जुयोगस्य स्थिति: तदा अपि सम्भवति यथा मेषादिचरराशय: लग्नादिचतुर्षु भावेषु न स्थित्वा अन्यत्र भवेयु:। तथैव मुसलयोगस्य स्थिति: वृषादिस्थिरराश्याधारिता वर्तते न तु भावाधारिता अत: वृषादिस्थिरराशीणां केन्द्रे पणफरे वा स्थितिरपि मुसलयोगं जनयति। इत्येवं नलयोगाय अपि ज्ञेयम्।

### २१.४.४ आश्रययोगस्य फलम्

रज्वादित्रयाणामाश्रययोगस्य फलं कल्याणवर्मणा सारावलीग्रन्थे एवं भणितम् –

**आश्रययोगे जाता अमिश्रिते सौख्यलाभगुणयुक्ता:।**
**अन्योन्यमिश्रिताश्चेद् विगतफला: स्युस्तदा योगा:॥**

**पदच्छेदः –** आश्रययोगे जाता अमिश्रिते सौख्य लाभ गुणयुक्ताः अन्योन्य मिश्रिताः चेत् विगतफलाः स्युः तदा योगाः।

**अन्वयः –** चेत् अमिश्रिते आश्रययोगे जाता सौख्य लाभ गुणयुक्ताः अन्योन्यमिश्रिताः तदा योगाः विगतफलाः स्युः।

**प्रतिपदार्थः –** आश्रययोगे = रज्जु-मुसल-नलादि आश्रययोगे जाता = समुत्पन्नाः, अमिश्रिते = अन्येषु नाभसयोगेषु भिन्नयोगे, सौख्य = सुखं, लाभ = आय, गुणयुक्ताः = सद्गुणसहिताः, अन्योन्य = परस्परं, मिश्रिताः = संयुताः, विगतफलाः = यातफलाः, स्युः = भवेयुः।

**भावार्थः –** आश्रययोगस्य फलमेवं वर्तते यत् आश्रययोगे समुत्पन्नः जातकः धनादिलाभं, सुखं सद्गुणयुतं भवति। आश्रययोगस्य सर्व फलं तदा लभ्यते यदा कुण्डल्याम् आश्रययोगोष्वन्यतमं विहाय अन्ये योगाः न घटिताः भवेयुः। किन्तु यदि आश्रययोगेन सह अन्येऽपि योगाः अवशिष्टनाभसयोगेषु अन्यतमे (अन्यतमो वा) स्युः तर्हि आश्रययोगं सम्पूर्ण फलं न लभते प्रत्युत् मिश्रितं फलं जातकः प्राप्नोति।

**बोधप्रश्नाः**

१. नाभसयोगाः कतिविधं भवन्ति?

२. यवनाचार्यैः कियत्संख्यकाः नाभसयोगा मन्यन्ते?

३. रज्जुयोगः कः भवति?

४. मुसलयोगः आश्रययोगेषु भवति न वा?

५. सर्वे ग्रहाः द्विस्वभावराशौ स्यात्तदा कः योगः?

## २१.५ दलयोगौ द्वौ

द्वात्रिंशन्नाभसयोगेषु दलयोगद्वयमपि प्रचलति। मालासर्पौ द्वौ योगौ दलसंज्ञकौ भवतः।

### २१.५.१ मालायोगः

तथैव कथयति कल्याणवर्मा सारावल्याम् –

**द्वे चार्धयोगसंज्ञे भुजङ्गमाले पराशरेणोक्ते।**

**पदच्छेदः –** द्वे च अर्धयोग संज्ञे भुजङ्गमाले पराशरेण उक्ते।

**अन्वयः –** च पराशरेण भुजङ्गमाले द्वे अर्धयोगसंज्ञे उक्ते।

**प्रतिपदार्थः –** च = पूर्वम् आश्रयोगान् कथितवान् तान् अतिरिच्य अन्यौ, पराशरेण = आचार्येण पराशरेण, भुजङ्गमाले = भुजङ्गः सर्पः, भुजङ्गश्च माला च इति भुजङ्गमाले, द्वे, अर्धयोगसंज्ञे = अर्धम् (दलं वा) संज्ञकौ योगौ, उक्ते = कथिते।

**भावार्थः –** सर्वप्रथमं कल्याणवर्मणा नाभसयोगानां वर्णनप्रसङ्गे त्रय आश्रययोगास्तेषां फलञ्च प्रतिपादितम्। आश्रययोगानन्तरं तेन द्वौ माला-सर्प इत्याख्यौ दलयोगौ विहितौ। तर्हि एतयोः कुण्डल्यां स्थितिः कथं निधार्यते? इति प्रश्ने सति।

स्पष्टयति कल्याणवर्मा –

**केन्द्रेषु सौम्यपापैर्मालासवर्पश्च दलयोगौ।**

**पदच्छेदः –** केन्द्रेषु सौम्यपापैः मालासर्पश्च दलयोगौ।

**अन्वयः –** केन्द्रेषु सौम्यपापैः मालासर्पश्च दलयोगौ।

**प्रतिपदार्थः –** केन्द्रेषु = कुण्डल्यां प्रथम-चतुर्थ-सप्तम-दशमभावेषु, सौम्यपापैः = सौम्यैः शुभग्रहैः पापैः अशुभग्रहैः, (क्रमशः स्थितिवशात्), मालासर्पश्च, दलयोगौ = माला एवं सर्पः इति द्वौ दलयोगौ भवतः।

यदा कुण्डल्यां सर्वे शुभग्रहाः केन्द्रेषु तथा सर्वे पापग्रहाः केन्द्रात् बहिः अन्येषु पणपर-आपोक्लिमेषु स्युः तदा अयं 'मालायोगः' इत्युच्यते।

तथा यदि सर्वे पापग्रहाः केन्द्रगताः एवं सर्वे शुभग्रहाः केन्द्रात् बहिः अन्येषु भावेषु गताः भवेयुः तदा अयं सर्प इत्याख्यो योगः सम्भवेत्। एतयोः नामवशात् फलमपि स्पुष्टमेव।




**( मालायोगः )**

### २१.५.२ मालायोगस्य फलम्

मालायोगस्य फलं श्रीमत्कल्याणवर्मणा सम्यक्‌रूपेण प्रतिपादितं अस्मिन् श्लोके-

**नित्यं सुखप्रधाना वाहनवस्त्रार्थभोगसम्पन्नाः।**
**कान्ताः सुबहुस्त्रीका मालायां सम्प्रसूताः स्युः॥**

**पदच्छेदः –** नित्यं सुखप्रधाना वाहन वस्त्र अर्थ भोग सम्पन्नाः कान्ताः सुबहु स्त्रीका मालायां सम्प्रसूताः स्युः।

**अन्वयः –** मालायां सम्प्रसूताः (जातकाः) नित्यं सुखप्रधाना वाहनवस्त्रार्थ-भोगसम्पन्नाः सुबहुस्त्रीका कान्ताः स्युः।

**प्रतिपदार्थः –** मालायां = मालायोगे, सम्प्रसूताः = समुत्पन्नाः, नित्यं = प्रायशः (सर्वदा), सुखप्रधाना = सुखयुता, वाहनवस्त्रार्थभोगसम्पन्नाः = सर्वेषां भौतिकादीनाम् उपयुज्यमानानां वस्तूनां भोक्ताः (वाहन-वस्त्र-धनादिभोगयुताः), सुबहुस्त्रीका = बहुषु सुन्दरस्त्रीषु युक्ता, कान्ता = जाया (पत्नि)।

**भावार्थः –** श्रीमत्कल्याणवर्मणा स्वकीये सारावलीग्रन्थे द्वात्रिंशत्नाभसयोगेषु मालायोगस्य फलं सम्यक्रूपेण प्रतिपादितम्। यदा यस्य कस्यापि जातकस्य जन्माङ्गचक्रे मालायोगः भवेत्तदा सः योगेऽस्मिन् समुत्पन्नः जातकः सर्वदा एव सुखप्राप्तकरः, वस्त्र-वाहन-धनादिभोक्ता भवति। पुनः अस्मिन् योगे समुत्पन्नः जातकः बहुषु सुन्दरस्त्रीषु रता बहुषु सुन्दरपत्निषु युताश्च भवतीति भवद्भिः पठिता।

### २१.५.३ सर्पयोगः

यदा यस्य जातकस्य जन्मकुण्डल्यां सर्वे पापग्रहाः केन्द्रस्थाने शुभग्रहाश्च केन्द्रात्बहिः स्यात्तदा सर्पयोगः प्रभवति। योगोऽयम् अशुभफलकारकः भवति। तद्यथा–




**( सर्पयोगः )**

**सर्पयोगस्य फलम् –**

सर्पयोगः अशुभफलप्रदायकः भवति। आचार्येण श्लोकेऽस्मिन् सर्पयोगस्य फलविषये एवं प्रतिपादितम् –

**विषमाः क्रूरा निःस्वा नित्यं दुःखार्दिताः सुदीनाश्च।**
**परभुक्ताः पानरताः सर्पे जाताः भवन्ति नराः॥**

**पदच्छेदः –** विषयाः क्रूराः निःस्वा नित्यं दुःखार्दिताः सुदीनाः च परभुक्ताः पानरताः सर्पे जाताः भवन्ति नराः।

**अन्वयः –** सर्पे जाता नराः विषयाः निःस्वा क्रूरा नित्यं दुःखार्दिताः सुदीनां परभुक्ताः पानरताः च भवन्ति।

**प्रतिपदार्थः –** सर्पे = सर्पयोगे, जाता = समुत्पन्नाः, नराः = जातकाः, विषयाः निःस्वा = विषमस्वभावयुता, क्रूरा = क्रूरप्रकृतिकः, नित्यं = सर्वदा, दुःखार्दिता = दुःखयुता, सुदीना = पीडिता, परभुक्ताः = अन्येषाम् अन्नादिभुक्ता, पानरताः = अन्नजलादिरताः।

**भावार्थः –** सर्पयोगे समुद्भवः जातकः विषमप्रकृतियुतः, कूप्रकृतिकः, निर्धनश्च भवति। एवं प्रकारेण योगेऽस्मिन् समुत्पन्नः जातकः सर्वदा एव दुःखार्दिताः, परान्नभोक्ता, पानरता सुदीनाश्च भवतीति आचार्यकल्याणवर्मणा स्वकीये सारावलीग्रन्थे प्रतिपादितम्।

प्रकारान्तरेण सर्पयोगस्यास्य फलविवेचनं अन्यस्मिन् जातकशास्त्रीयग्रन्थेष्वपि सम्यक्रूपेण वर्ण्यते।

## २१.६ सप्तसंख्यायोगाः

द्वात्रिंशन्नाभसयोगेषु संख्यायोगानां निर्धारणमपि आचार्यैः कृतम्। तत्र संख्यायोगाः कियदिति जिज्ञासा भवति। सप्तसंख्यायोगाः बहुषु जातकग्रन्थेषु आचार्यैः वर्णिताः। नाम्नैव स्फुटं भवति यत् एतेषु योगेषु संख्यायाः महत्त्वं वर्तते। तत्कथं? यतो हि एते योगाः एकादि भवनेषु स्थितिवशात् उत्पद्यन्ते। अर्थात् यदि एकस्मिन् भावे सर्वे ग्रहाः तदा गोल इत्याख्यः योगः, यदा द्वयोः भावयोः ग्रहाणां स्थितिस्तदा युग इत्याख्यः संख्यायोगः, त्रिषु भावेषु ग्रहाणां स्थित्या शूलं इत्याख्यः संख्यायोगः इत्येवं क्रमेण अवगन्तव्यम्। अत्र दैवज्ञेन श्रीमत्कल्याणवर्मणा स्वकीये सारावलीग्रन्थे श्लोकेऽस्मिन् एवं निर्दिष्टः सप्तसंख्यायोगः विषये –

**एकभवनादिसंस्थैः संख्याख्याः स्युर्यथाक्रमं योगाः।**
**गोलयुगशूलसंज्ञाः केदारः पाशदामिनीवीणाः॥**

**पदच्छेदः –** एक भवन आदि संस्थैः संख्या आख्याः स्युः यथाक्रमं योगाः गोल–युग–शूल संज्ञाः केदारः पाशदामिनी–वीणाः।

**अन्वयः –** एकभवनादिसंस्थैः (सर्वैः ग्रहैः) गोलयुगशूलकेदारपाशदामिनीवीणाः यथाक्रमं योगाः संख्याख्याः संज्ञाः स्युः।

**प्रतिपदार्थः –** एकभवनादिसंस्थैः = एकराशिसंस्थैः (एकैभावसंस्थितैः), सर्वैः ग्रहैः = सूर्यादिग्रहैः, गोलयुगशूलकेदारपाशदामिनीवीणाः = संख्यादिसप्तयोगाः, यथाक्रमं = क्रमानुसारेण, संख्याख्याः = संख्यायोगविशेषाः।

**भावार्थः –** एकादिभवनेषु (भावेषु राशिषु) वा समेषां सूर्यादिग्रहाणां स्थितिवशात् एते संख्या योगाः गोलादयः प्रवर्तन्ते। तद्यथा –

एकस्मिन् भावे समेषां ग्रहाणां स्थितिवशात् गोलयोगः।

द्वयोः भावयोः समेषां ग्रहाणां स्थितिवशात् युगयोगः।

त्रिषु भावेषु समेषां ग्रहाणां स्थितिवशात् शूलयोगः।

चतुर्षु भावेषु समेषां ग्रहाणां स्थितिवशात् केदारयोगः।

पञ्चसु भावेषु समेषां ग्रहाणां स्थितिवशात् पाशयोगः।

षट्सु भावेषु समेषां ग्रहाणां स्थितिवशात् दामिनीयोगः।

सप्तसु भावेषु समेषां ग्रहाणां स्थितिवशात् वीणायोगः।

### २१.६.१ गोलयोगः

यस्य जातकस्य जन्माङ्गचक्रे सर्वे ग्रहाः एकराशिस्थाः स्युस्तदा गोलयोगः भवति। तद्यथा –

योगेऽस्मिन् यतोहि सर्वे ग्रहाः सम्भूय एकस्मिन् भावे एव भवन्ति अतः तेषाम् उपस्थितिः बिन्दुवत् गोलवत् वा स्वीक्रियते।




**( गोलयोगः )**

### २१.६.२ युगयोगः

यस्य कस्यापि जातकस्य जन्मकुण्डल्यां यदि सर्वे ग्रहाः द्विराशिस्थाः स्युस्तदा भवति युगयोगः। तद्यथा–




**( शूलयोगः )**

### २१.६.३ शूलयोगः

यदा यस्य कस्यापि जातकस्य जन्माङ्गचक्रे सर्वेषां सूर्यादिग्रहाणां स्थितिः त्रिषु राशिषु भवति तदा शूलयोगः वर्तते। यथा–




**( शूलयोगः )**

### २१.६.४ केदारयोगः

जन्मकुण्डल्यां चतुर्षु राशिषु सर्वेषां ग्रहाणाम् अवस्थितिवशात् केदारयोगः भवति। यथा –




**( केदारयोगः )**

### २१.६.५ पाशयोगः

यदा यस्य कस्यापि जातकस्य जन्माङ्गचक्रे पञ्चसु राशिषु सर्वे ग्रहाः स्युस्तदा भवति पाशयोगः।




**( पाशयोगः )**

### २१.६.६ दामिनीयोगः

यदा यस्य कस्यापि जातकस्य जन्माङ्गचक्रे सर्वेषां ग्रहाणाम् अवस्थितिः षट्सु राशिषु स्युस्तदा दामिनीयोगः भवति। तद्यथा–




**( दामिनीयोगः )**

### २१.६.७ वीणायोगः

यदि सर्वे ग्रहाः यस्य कस्यापि जातकस्य जन्मकुण्डल्यां सप्तसु भावेषु राशिषु वा स्थिताः स्युस्तर्हि भवति वीणायोगः। यथा –




**( वीणायोग: )**

**सप्तसंख्यायोगानां फलम्** -

वीणादिसप्तसंख्यायोगानां फलं सारावलीग्रन्थे आचार्यकल्याणवर्मणा एवं निर्दिष्टम्-

**परभाग्यलब्धसौख्या: परभाग्यैरेव जीवितं तेषाम्।**
**संख्या सेज्ञं जाता ये पुरुषा: सर्वतो विकला॥**

**पदच्छेद:** – परभाग्यलब्धसौख्या: परभाग्यै: एव जीवितं तेषां संख्या संज्ञे जाता वे पुरुषा: सर्वत: विकला।

**अन्वय:** – ये पुरुषा: परभाग्यलब्धसौख्या: तेषां जीवितं परभाग्यै एव संख्या संज्ञे जाता सर्वतो विकला भवन्ति।

**प्रतिपदार्थ:** – परभाग्य = अन्येषां भाग्यं, लब्धसौख्या: = प्राप्तसुखं, परभाग्यै: = परेषां देवै:, जीवितं = जीवनयापनं, तेषां = संख्यायोगानां, जाता = समुत्पन्ना, ये पुरुषा: = ये जना:, सर्वत: = विकला = विकलाङ्गा: (सुदशारहिता:।

**भावार्थ:** – सप्तसुसंख्यायोगेषु समुत्पन्न: जातक: अन्येषां मनुष्याणां भाग्यै: स्व-जीवननिवर्हनं करोति। परेषां भाग्यै: सुखं प्राप्नोति। अन्येषां साहाय्येन साफल्यं प्राप्नोति। मुख्यरूपेण संख्यायोगेषु समुत्पन्न: जातक: विकलोऽपि भवति।

**बोधप्रश्ना:**

६. संख्यायोग: के? नामानि लेख्यानि।

७. गोलयोग: कदा भवति?

८. युगयोग: कदा भवति?

९. शूलयोगस्य निर्धारणं कुरुत।

१०. केदारयोग: कदा भवति?

११. पाशयोगः कदा भवति?

१२. दामिनीयोगस्य परिचयः देयः।

१३. वीणायोगः कदा भवति?

## २१.७ सारांशः

पाठेऽस्मिन् भवता सर्वप्रथमं नाभसयोगः कः इति ज्ञातः। अर्थात् द्वात्रिंशन्नाभसयोगानां विषये परिचयात्मकरूपेण ज्ञानं लब्धम्। तदनन्तरं आश्रययोगत्रयं, सप्तसंख्यायोगाः विंशतिश्चाकृतियोगाः पठिताः। अर्थात् त्रिषु आश्रययोगेषु रज्जुयोगविषये अधीतवान्। सर्वे ग्रहाः जन्माङ्गचक्रे चरराशौ स्थिताः स्युस्तदा भवति रज्जुयोगः। मुसलयोगस्तु स्थिरराशौ सर्वेषां ग्रहाणां स्थितिवशात् भवति। यदा द्विस्वभावराशौ सर्वे ग्रहाः स्थिता भवन्ति तदा नलयोगः समुत्पद्यते। एवमेव मालासर्पयोगद्वयं दलसंज्ञकं भवति। सर्वे शुभग्रहाः चतुर्षु केन्द्रस्थानेषु स्थिता भवन्ति तदैव मालासंज्ञकयोगः विद्यते। तथैव सर्वे पापग्रहाः चतुर्षु केन्द्रस्थानेषु भवन्ति तदा सर्पयोगः भवति। मालायोगस्य फलं जातकाय शुभं भवति। सर्पयोगस्तु अशुभफलप्रदायकः वर्तते।

तदनन्तरं गोलादिसप्तसंख्यायोगाः भवता सरलरीत्या पठिता। यदि सर्वे शुभाशुभग्रहाः एकराशौ स्थिताः स्युस्तदा भवति गोलयोगः। एवमेव यदि सर्वे शुभाशुभग्रहाः सप्तराशिषु स्थिताः भवेत्तदा वीणायोगः भवति। अतएव द्वात्रिंशन्नाभसयोगेषु सम्यक्तया अध्ययनं भवता कृतम्।

## २१.८ शब्दावली

१. नौ = नौकायोगः।

२. कार्मुकयोगः = धनुयोगः।

३. वज्रः = इन्द्रायुधः।

४. सरोजम् = कमलम्।

५. कान्ता = पत्नी।

६. अर्थः = धनम्।

७. परभुक्ताः = अन्येषां धनेन भुक्ताः अन्नेन जीविताः।

८. जाताः = समुत्पन्नाः।

## २१.९ सन्दर्भग्रन्थः

१. सारावली - श्रीमत्कल्याणवर्माविरचितः, सम्पादकः - मुरलीधरचतुर्वेदी मोतीलाल बनारसीदास, वाराणसी।

२. सारावली, टीकाकार - डॉ. सुरेशचन्द्रमिश्र, रंजन पब्लिकेशन, दिल्ली।

## २१.१० सहायकग्रन्थाः

१. बृहज्जातकम् - वराहमिहिरविरचितः, चौखम्बा प्रकाशन वाराणसी।

२. बृहत्पाराशरहोराशास्त्रम्, टीकाकारः – डॉ. सुरेशचन्द्रमिश्रः रंजनपब्लिकेशन, दरियागंज, दिल्ली।

## २१.११ बोधप्रश्नोत्तराणि

१. द्वात्रिंशन्नाभसयोगाः।

२. अष्टादशसंख्यकाः नाभसयोगाः मन्यन्ते।

३. सर्वे ग्रहाः चरराशौ भवेयुस्तदा रज्जुयोगः भवति।

४. मुसलयोगः आश्रययोगस्यैव भेदः वर्तते।

५. नलयोगः।

६. सप्तसंख्यायोगाः भवन्ति। गोल–शूल–युग–केदार–पाश–दामिनी–वीणायोगाश्च भवन्ति।

७. सर्वे ग्रहाः एकस्मिन् राशौ भवन्ति तदा गोलयोगः भवति।

८. सर्वे ग्रहाः द्वौ भावौ भवतस्तदा युगयोगः।

९. सर्वे ग्रहाः त्रिषु भावेषु भवन्ति तदा शूलयोगः।

१०. सर्वे ग्रहाः चतुर्षु भावेषु भवतस्तदा केदारयोगः भवति।

११. पञ्चसु भावेषु सर्वे ग्रहाः भवन्ति तदा पाशयोगः विद्यते।

१२. षट्सु भावेषु सर्वे ग्रहाः वर्तन्ते तदा दामिनीयोगः भवति।

१३. सर्वे ग्रहाः सप्तभावेषु जायन्ते तदा वीणायोगः जनयति।

## २१.१२ अभ्यासप्रश्नाः

१. द्वात्रिंशन्नाभसयोगानां सश्लोकं वर्णनं कुरुत।

२. सश्लोकं आश्रययोगविवेचनं कुरुत।

३. सफलं मालायोगं वर्णयत।

४. सफलं सर्पयोगनिर्धारणं कुरुत।

५. सप्तसंख्यायोगानां नामानि विलिख्य वर्णयत।

६. केदारयोगस्य वर्णनं कुरुत।



# द्वाविंशः पाठः - नाभसयोगः ( द्वितीयः )

**पाठसंरचना**



## २२.१ प्रस्तावना

सामान्यतयाऽऽकाशस्थानां ग्रहनक्षत्रादिपिण्डानां गति-स्थितिः प्रभावादिनिरूपणं यस्मिन् शास्त्रे भवति तज्ज्योतिषमिति। ज्योतिषशास्त्रं कालविधायकं शास्त्रमस्ति। कालस्य निर्धारणमेव

अस्य मुख्यप्रयोजनं वर्त्तते। जीवने कदा सुखं कदा दुःखं च भविष्यति इति ज्योतिषशास्त्रेण सम्यक्ज्ञानं भवति।

'नाभस' शब्दस्य अर्थः आकाशसम्बन्धी इति।

इत्थं ग्रहाणां विशिष्टा आकाशीयस्थितिरेव 'नाभसयोग' इत्युच्यते। अयं नाभसयोगः यवनाचार्यैः प्रतिपादिताः। एते संख्यायाम् अष्टादशशतानि (१८००) सन्ति। एतेषां मूलं द्वात्रिंशत् (३२) योगाः वर्तन्ते। एता एव द्वात्रिंशत् योगाः वैकल्प्यात् अष्टादशशतेषु परिणमन्ते। अतः वराहाचार्येण मूलान् द्वात्रिंशयोगान् आदाय स्वग्रन्थे तेषां विशदचर्चा विहिता।

एते द्वात्रिंशन्नाभसयोगाः मुख्यतया – १. आकृतिः, २. आश्रयः, ३. संख्या, ४. दलम् इति चतुर्धा विभक्तः। एतेषु आदौ आकृतियोगानां वर्णनमध्यायेऽस्मिन् क्रियते।

## २२.२ उद्देश्यम्

अस्य पाठस्य अध्ययनेन भवान्

- कति संख्याकाः नाभसयोगाः इति प्रतिपादयितुं क्षमः भविष्यति।
- विशेषतः आकृतियोगानां विशेषलक्षणम् अन्यान् बोधयितुं शक्षयति।
- नौकादियोगान् अधिकृत्य फलनिर्देशं कर्तुं समर्थः भविष्यति।

## २२.३ विंशतिराकृतियोगाः

प्रायः सर्वेष्वपि फलितज्योतिषग्रन्थेषु विशेषरूपेण नाभसयोगाः प्रतिपादिताः सन्ति, नाभसयोगान्तर्गतं विंशतिः आकृतियोगाः वर्णिताः सन्ति। यथा – नौकाप्रभृतियोगाः, यूपशरप्रभृति योगाः, अर्द्धचन्द्रगदादिविविधयोगः तथा च शकटादियोगाः वर्णिताः सन्ति। पराशरमताऽनुसारेण यथा प्रतिपादितम् –

**गदाख्यः शकटाख्यश्च शृङ्गाटकविहङ्गमौ।**
**हलवज्रयवाश्चैव कमलं वापियूपकौ।**
**शरशक्ति दण्डनौकाकूटच्छत्र धनूंषि च।**
**अर्द्धचन्द्रस्तु चक्रञ्च समुद्रश्चेति विंशतिः।।**

## २२.४ नौकाप्रभृतियोगाः

**होरादिकण्टकेभ्यः सप्तर्क्षगतैः क्रमेण योगाः स्युः।**
**नौकूटच्छत्रकार्मुकनिर्दिष्टाः पूर्वयवनेन्द्रैः।।**

**अन्वयः** – होरादिकण्टकेभ्यः क्रमेण सप्तर्क्षगतैः नौकूटच्छत्रकार्मुकयोगाः पूर्वयवनेन्द्रैः कथिता स्युः।

**शब्दार्थः** – होरादिकण्टकेभ्यः = लग्नादिकेन्द्रस्थानेभ्यः (१, ४, ८, १०) क्रमेण = क्रमानुसारेण, सप्तर्क्षगतैः = सप्तसंख्यकैः ग्रहैः प्राप्तैः नौकूटच्छत्रकार्मुकः = नौका–कूट–छत्र–चापयोगाः चत्वारः योगाः स्युः इति। पूर्वयवनेन्द्रैः = प्राचीनाचार्यैः, निर्दिष्टाः = कथिताः।

**व्याख्याः** – लग्नकेन्द्राद् आरभ्य अस्मात् केन्द्रात्सप्तभिर्ग्रहैः सप्तर्क्षसंस्थितैः नौकूटच्छत्रचापसंज्ञयोगचतुष्टयं भवति। यथोक्तं वराहमिहिरेण –

**नौकूटच्छत्रचापानि तद्वत् सप्तर्क्षसंस्थितैः।**
**अर्द्धचन्द्रस्तु नावाद्यैः प्रोक्तादन्यर्क्षसंस्थितैः।।**

### २२.४.१ नौकायोग:

यदि जातकस्य जन्मकुण्डल्यां लग्नद्वितीयतृतीयचतुर्थपञ्चमषष्ठसप्तमेषु भावेषु सर्वे ग्रहा: स्थिता: भवन्ति तदा नौका योग: भवति। यथा –

**नौकायोग:**




### २२.४.२ कूटयोग:

यदि जन्माङ्गे चतुर्थपञ्चमषष्ठसप्तमाष्टमनवमदशमेषु सर्वे ग्रहा: भवन्ति तदा कूटाख्यो योगो भवति। यथा–

**कूटयोग:**



### २२.४.३ छत्रयोग:

यदि कस्यापि जातकस्य जन्मकुण्डल्यां सप्तमाष्टमनवमदशमैकादशद्वादशलग्नेषु सर्वे ग्रहा: भवन्ति तदा छत्राख्यो योग: भवति।

**उदाहरणम्** -




### २२.४.४ चापयोग:

यस्य जातकस्य जन्मकुण्डल्यां दशम-एकादश-द्वादश-लग्न-द्वितीय-तृतीय-चतुर्थेषु यदा सर्वे ग्रहा: भवन्ति तदा चापं/चापाख्यो योग: भवति। तद्यथा-




**बोधप्रश्ना:**

१. नौकायोग: क: ?

२. किन्नाम् छत्रयोग: ?

३. 'सप्तर्क्ष' शब्दस्य कोऽर्थ: ?

४. ''कार्मुक'' शब्दस्य कोऽर्थ ?

५.	चापयोग: कथं सम्भवति ?



## २२.५ यूपशरप्रभृतियोगा:

**लग्नादिकण्टकेभ्यश्च चतुर्गृहावस्थितैर्ग्रहैर्योगा: ।**
**यूपशरशक्तिदण्डा: सत्याचार्यप्रिया नित्यम् ।।**

**अन्वय:** – यूपशरशक्तिदण्डा: योगा: लग्नादिकण्टकेभ्य: चतुर्गृहावस्थितै: ग्रहै: नित्यं सत्याचार्यप्रिया भवन्ति।

**शब्दार्थ:** – लग्नादिकण्टकेभ्य: = लग्नादिभ्य: चतुर्भ्य: लग्न–चतुर्थ–सप्तम–दशमभावेभ्य: समारभ्य (१, ४, ७, १०) चतुर्गृहावस्थितै: = चतुर्षु अग्रिमेषु स्थानेषु स्थितै:, इमे योगा: नित्यं सत्याचार्यस्य प्रिया: सन्ति। यूपशरशक्तिदण्डा: = यूप–शर–शक्ति–दण्ड योगा: भवन्ति।

**व्याख्या:** – यदा होरालग्नं तदाद्यै: केन्द्रै: क्रमात्परिपट्या लग्नकेन्द्रमादित: कृत्वा चतुर्षु गृहेषु यथा– सम्भवं सर्वग्रहाणामवस्थानं भवति तदा यूपशरशक्तिदण्डाख्याश्चत्वारो योगा भवन्ति।

**कण्टकादिप्रवृत्तैस्तु चतुर्गृहगतैर्ग्रहै: ।**
**यूपेषुशक्तिदण्डाख्या होराद्यै: कण्टकै: क्रमात् ।।**

### २२.५.१ यूपयोग:

यस्य जातकस्य जन्मकुण्डल्यां लग्नद्वितीयतृतीयचतुर्थेषु भावेषु यदा सर्वे ग्रहा: भवन्ति तदा यूपाख्यो योगो भवति। तद्यथा–




### २२.५.२ शरयोग:

यदि जातकस्य जन्माङ्गचक्रे चतुर्थपञ्चमषष्ठसप्तमेषु चतुर्षु भावेषु सर्वे एव ग्रहा भवन्ति तदा शराख्योयोग: भवति।

**उदाहरणम्** –

**शरयोगः**




### २२.५.३ शक्तियोगः

यदि कस्यापि जातकस्य जन्मकुण्डल्यां सप्तमाष्टमनवमदशमेषु चतुर्षु सर्वे एव ग्रहाः भवन्ति तदा शक्तियोगः भवति। तद्यथा–

**शक्तियोगः**




### २२.५.४ दण्डयोगः

कस्यापि जातकस्य जन्माङ्गे दशमैकादशद्वादशलग्नेषु चतुर्षु सर्वे ग्रहाः भवन्ति तदा दण्डयोगः भवति।

**उदाहरणम् –**

**दण्डयोगः**




**बोधप्रश्नाः**

६. यूपयोगेन किं ज्ञायते ?

७. शरयोगेन किमवगम्यते ?

८. शक्तियोगशब्दस्य कोऽर्थः ?

९. किन्नाम् दण्डयोगः ?

१०. लग्नादिककण्टकेभ्यः इत्यस्य कोऽर्थः ?

## २२.६ अर्द्धचन्द्रगदादियोगः

**सप्तर्क्षगैर्ग्रहेन्द्रैः केन्द्रादन्यत्र कीर्तितोऽर्धशशी।**
**केन्द्रप्रत्यासन्नैर्भवनद्वयगैर्गदा नाम।।**

**अन्वयः** - केन्द्रात् अन्यत्र सप्तर्क्षगैः ग्रहेन्द्रैः अर्धशशी केन्द्रप्रत्यासन्नैः भवनद्वयगैः गदा नाम कीर्तितः।

**शब्दार्थः** - केन्द्रात् = प्रथम-चतुर्थ-सप्तम-दशमभावतः। सप्तर्क्षगैः = सप्तग्रहाः। अर्द्धशशीः = अर्द्धचन्द्रः। केन्द्रप्रत्यासन्नैः = समीपस्थ केन्द्रस्थानम्। भवनद्वयगैः = उभयोः केन्द्रयोः, गदा = गदानामक योगः।

**व्याख्याः** - यदि केन्द्रात् (१,४,७,१०) इरस्थानात् प्रारभ्य सप्तस्थानेषु सर्वे ग्रहाः भवन्ति, तदा अर्द्धचन्द्रनामकयोगः भवति।

**एते अष्टप्रकारकाः भवन्ति। यथा-**

**प्रथमोऽर्द्धचन्द्रनामकयोगः**

### २२.६.१ अर्द्धचन्द्रयोगः

यदि जन्मकुण्डल्यां द्वितीयतृतीयचतुर्थपञ्चमषष्ठसप्तमाष्टमेषु सप्तसु स्थानेषु सर्वे ग्रहाः भवन्ति, तदा प्रथमअर्द्धचन्द्रनामकयोगः भवति। उदाहरणम् -

**प्रथमोऽर्द्धचन्द्रयोग:**




**द्वितीयोऽर्द्धचन्द्रनामकयोग:**

यदि जन्माङ्गपत्रे तृतीयभावात् नवमभावपर्यन्तं सर्वेग्रहा: भवन्ति तदा द्वितीयअर्द्धचन्द्रयोगो भवति। यथा –

**द्वितीयोऽर्द्धचन्द्रयोग:**




**तृतीयोऽर्द्धचन्द्रनामकयोग:**

यदि जन्माङ्गे पञ्चमभावत: लाभभावपर्यन्तं सर्वे ग्रहा: भवन्ति तदा तृतीयअर्द्धचन्द्रयोग: भवति। तद्यथा–

**तृतीयोऽर्द्धचन्द्रयोग:**




**चतुर्थोऽर्द्धचन्द्रनामकयोग: –**

यदि कस्यापि जातकस्य जन्मकुण्डल्यां षष्ठभावात् द्वादशभावपर्यन्तं सर्वेग्रहा: भवन्ति तर्हि चतुर्थअर्द्धचन्द्र योग: भवति। तद्यथा–

**चतुर्थोऽर्द्धचन्द्रयोग:**




**पञ्चमार्द्धचन्द्रनामयोग:**

यदि जातकस्य जन्मकुण्डल्यां अष्टमादिषु द्वितीयान्तेषु भावपर्यन्तं सर्वे ग्रहा: भवन्ति तर्हि पञ्चमार्द्धचन्द्रनामकयोग: भवति।

**पञ्चमार्द्धचन्द्रयोगः**




**षष्ठार्द्धचन्द्रयोगः –**

यदि जातकस्य जन्माङ्गे नवमभावात् तृतीयभावपर्यन्तं सर्वे ग्रहाः भवन्ति तदा षष्ठार्द्धचन्द्रयोगः भवति। उदाहरणम् –

**षष्ठार्द्धचन्द्रयोगः**




**सप्तमार्द्धचन्द्रनामकयोगः**

यदि जन्मकुण्डल्यां एकादशभावात् पञ्चमभावपर्यन्तं सर्वे ग्रहाः भवन्ति तर्हि सप्तमार्द्धचन्द्रयोगः भवति। उदाहरणम् –

**सप्तमार्द्धचन्द्रयोग:**




**अष्टमनामकार्द्धचन्द्रयोग:**

यदि जन्माङ्गपत्रे द्वादशभावात् षष्ठभावपर्यन्तं सर्वे ग्रहा: भवन्ति तर्हि अष्टमनामकार्द्धचन्द्रयोग: भवति। उदाहरणम् –

**अष्टार्द्धचन्द्रयोग:**




### २२.६.२ गदायोग:

यदि जन्मपत्रे समीपस्थ उभयो: केन्द्रयो: सर्वे ग्रहा: भवन्ति तर्हि गदानामक योग: भवति। एषोऽपि योग: चतुर्धा भवति। यथा–

लग्नचतुर्थस्थानयो: सर्वेग्रहा:।

चतुर्थे एवं सप्तमभावे सर्वेग्रहा:।

सप्तमे एवं दशमभावे सर्वेग्रहा:।

दशमे एवं प्रथमभावे सर्वेग्रहाः।

**गदायोगः**




### २२.६.३ वज्रयोगः

यदि जन्मकुण्डल्यां लग्ने एवञ्च सप्तमभावे सर्वे शुभग्रहाः (च. बु. गुरु, शुक्र) भवन्ति तथा च चतुर्थे एवं दशमभावे सर्वे पापग्रहाः भवन्ति चेत् वज्रनामको योगः भवति। यथा–

**वज्रयोगः**




### २२.६.४ यवयोगः

यदि जन्माङ्गचक्रे लग्ने एवञ्च सप्तमभावे सर्वे पापग्रहाः भवन्ति तथा च सर्वे शुभग्रहाः चतुर्थे एवं दशमभावे भवन्ति तर्हि यवनामको योगः भवति। यथा–

**यवयोगः**




### २२.६.५ कमलयोगः

जातकस्य जन्मकुण्डल्यां लग्ने–सप्तमे–चतुर्थे–दशमभावे च यदि मिश्रितग्रहाः (सूर्य–मंगल–चन्द्र–गुरु, शनि, बुधः) भवन्ति चेत् कमलनामकयोगः भवति। यथा–

**कमलयोगः**




### २२.६.६ वापीयोगः

यस्य जातकस्य जन्मकुण्डल्यां लग्ने–सप्तमे–चतुर्थे–दशमभावे च ग्रहाः (सू. मं. बु. च. गु. श. शु.) न भवन्ति तर्हि वापी योगः भवति। तद्यथा–




वराहमिहिराचार्य मतानुसारेण यथा प्रतिपादितम्–

**आसन्नकेन्द्रभवनद्वयगैर्गदाख्यस्तन्वस्तगैस्तु शकटं विहगः रवबन्धवोः।**
**शृङ्गाटकं नवपञ्चमलग्नसंस्थैर्लग्नान्यगैहैलमिति प्रवदन्ति तज्ज्ञाः।।**

**शकटाण्डजवच्छुभाशुभैर्वज्रं तद्विपरीतगैर्यवः।**
**कमलं तु विमिश्रसंस्थितैर्वापी तद् यदि केन्द्रबाह्यतः।।**

(बृ. जा. अ. १२, श्लो. ४–५)

**बोधप्रश्नाः**

११. प्रथमार्द्धचन्द्रनामकयोगः कथं सम्भवति ?

१२. अर्द्धचन्द्रयोगस्य कति भेदाः सन्ति ?

१३. गदायोगाः कति प्रकारकाः भवन्ति ?

१४. प्रथमप्रकारकः गदानामक योगः कः ?

१५. 'अर्द्धशशी' इत्यस्य कोऽर्थः ?

## २२.७ शकटादियोगाः

**होरास्तगतैः शकटं चतुर्थदशमाश्रितैर्भवेद्विहगः।**
**उदयान्त्यगैस्त्रिकोणे हल इति शृङ्गाटकं सलग्ने तत्।।**

**अन्वयः** – होरास्तगतैः शकटं चतुर्थदशमाश्रितैः विहगः भवेत् उदयात् अन्यगैः त्रिकोणे हल सलग्ने तत् शृङ्गाटकम् इति।

**शब्दार्थः** – होरास्तगतैः = लग्नसप्तमभावे ग्रहाः, शकटं = शकटयोगः, चतुर्थदशमाश्रितैः = चतुर्थे वं दशमभावे स्थिताः, विहगः = खगः, उदयात् = लग्नात्, अन्यगैः = अन्य स्थाने (त्यक्तवा) हल = हलनामकयोगः, सलग्ने–लग्न–पञ्चम–नवमभावे, ततः = तस्मिन् शृङ्गाटकं = शृङ्गाटकनामक योगः।

**व्याख्या** – होरास्तगेषु लग्नसप्तमगेषु सर्वग्रहेषु शकटं भवति। दशमचतुर्थयो: सर्वग्रहेषु स्थितेषु विहगाख्यो योग: भवति। नवमपञ्चमलग्नस्थै: सर्वग्रहै: शृङ्गाटकाख्यो योगो भवति। लग्नं वर्जयित्वा सर्वे ग्रहा: परस्परं त्रिकोणगता भवन्ति तदा हलमिति योग: भवति। स च त्रिप्रकारक:। यथा द्वितीयषड्दशमस्थै सर्वग्रहैरेक:। तृतीयसप्तमैकादश–स्थैर्द्वितीय:। चतुर्थाष्टमद्वादशथैस्तृतीयप्रकार: भवति।

### २२.७.१ शकटयोग:

यदि जन्माङ्गचक्रे लग्ने एवं सप्तमभावे समस्तग्रहा: भवन्ति तर्हि शकटनामक योग: भवति। यथा–

**( शकटयोग: )**




### २२.७.२ विहगयोग:

यस्य जातकस्य जन्मकुण्डल्यां चतुर्थे एवं दशमभावे सर्वे ग्रहा: भवन्ति चेत् विहगयोग: भवति। यथा–

**( विहगयोग: )**




### २२.७.३ हलयोगः

लग्नं परित्यज्य परस्परं त्रिकोणे यदि सम्पूर्णग्रहाः भवन्ति तर्हि हलनामकयोगः भवति। हलयोगस्य त्रयः भेदाः सन्ति।

यथा –

१. द्वितीये, षष्ठे, दशमभावे च सर्वे ग्रहाः।

२. तृतीये, सप्तमे, एकादशभावे च सर्वे ग्रहाः।

३. चतुर्थे, अष्टमे, द्वादशभावे च सर्वे ग्रहाः।

**हलयोगः**




### २२.७.४ शृङ्गाटकयोगः

यदि जन्मकुण्डल्यां लग्न–पञ्चम नवमभावेषु समस्तग्रहाः भवन्ति तर्हि शृङ्गाटकयोगः भवति। यथा–

**शृङ्गाटक योगः**




**२२.८.५ चक्रयोगः**

यदि जन्मकुण्डल्यां लग्नात् एकराशिं त्यक्त्वा सर्वेग्रहाः भवन्ति तर्हि चक्रयोगः।

**चक्रयोगः**




**२२.७.६ समुद्रयोगः**

यदि जन्माङ्गे द्वितीयभावतः द्वादशभाव पर्यन्तम् एकराशिं विहाय सप्तमभावे समस्तग्रहाः भवन्ति चेत् समुद्रयोगः भवति। तद्यथा–

**समुद्रयोगः**




**बोधप्रश्नाः**

१६. शकटयोगेन किमवगम्यते ?

१७. कानि केन्द्रस्थानानि भवन्ति ?

१८. हलयोगस्य विचारः कथं क्रियते।

१९. चक्रयोगः किमस्ति ?

२२. समुद्रयोगः किम् ?

## २२.८ सारांशः

अस्मिन् पाठे नाभसयोगान्तर्गते विंशतिराकृतियोगाः वर्णिताः सन्ति। वस्तुतः मानवस्य सर्वासु प्रवित्तषु जिज्ञासा प्रवृत्तिः एव सर्वस्य ज्ञानस्य मूलकारणम् अस्ति। अत्र आकृतियोगे विषयान्तर्गते नौकाप्रभृतियोगाः, यूपशरप्रभृतियोगाः, अर्द्धचन्द्रगदादियोगाः शकटादियोगाश्च उल्लिखिताः सन्ति। वस्तुतः उपर्युक्तयोगाः भिन्न-भिन्न ग्रहस्थित्यनुसारं भिन्न-भिन्न कुण्डल्यां भिन्न प्रकारेण भवन्ति। आचार्यश्रीमत्कल्याणवर्मविरचिते 'सारावली' नामके ग्रन्थे एतेषां वर्णनं सम्यक्तया उपपादितमस्ति। उपरोक्तयोगान्तर्गते जन्मकाले ग्रहाः यस्यां परिस्थितौ भवन्ति तद्नुसारेण एव तस्मिन् जातके प्रकृतिगुणदोषाश्च विद्यमाना भवन्ति।

## २२.९ शब्दावली

| | | | |
|---|---|---|---|
| १. | नौ | = | नौकायोगः। |
| २. | कण्टकः | = | केन्द्रस्थानम्। |
| ३. | कार्मुकः | = | चापयोगः। |
| ४. | अर्धराशी | = | अर्द्धचन्द्रः। |
| ५. | गृह | = | भावः। |
| ६. | सप्तर्क्षः | = | सप्तग्रहाः। |

| | | | |
|---|---|---|---|
| ७. | पूर्वयवनेन्द्रै: | = | प्राचीन आचार्यै:। |
| ८. | कथिता: | = | उक्ता:। |
| ९. | केन्द्रप्रत्यासन्नै | = | समीपस्थ केन्द्रस्थानम्। |
| १०. | अस्त: | = | सप्तमभाव:। |
| ११. | सौम्य: | = | शुभ:। |
| १२. | पद्मयोग: | = | कमलयोग:। |
| १३. | विहग: | = | खग:। |
| १४. | शकटं | = | शकटयोग:। |
| १५. | उदयात् | = | लग्नात्। |
| १६. | शृङ्गाटकं | = | शृङ्गाटकनामकयोग:। |

## २२.१० सन्दर्भग्रन्था:


१. सारावली – श्रीमत्कल्याणवर्मविरचिता।

२. बृहज्जातकम् – श्रीमद्दैवज्ञश्रीवराहमिहिराचार्येण विरचितम्, व्याख्याकार: केदारदत्तजोशी। मोतीलाल बनारसीदास, वाराणसी– ५।

३. बृहत्पाराशरहोराशास्त्रम् – पराशरमुनिविरचितं, व्याख्याकार: देवचन्द्रझा – चौखम्भा प्रकाशन, वाराणसी–५।


## २२.११ बोधप्रश्नोत्तराणि

१. लग्नादारभ्य सप्तसु भावेषु यदि ग्रहाणां स्थिति: तर्हि नौकायोग:।

२. यदा सप्तमात् लग्नं यावत् सप्तभावेषु ग्रहा: भवन्ति तर्हि हतयोग:।

३. सप्तभावा:।

४. धन:।

५. यदा दशमात् चतुर्थभावं यावत् ग्रहा: स्यु: तर्हि चावयोग:।

६. लग्नादारभ्य चतुर्थभावं यावत् सर्वेषां ग्रहाणां स्थिति: यूपयोगञ्जनयति।

७. चतुर्थात् सप्तमभावपर्यन्तं सर्वे ग्रहा: यदि स्यु: तर्हि शरयोग:।

८. सप्तमात् दशमपर्यन्तं समे ग्रहा: शक्तियोगं करोति।

९. दशमाल्लग्नपर्यन्तं ग्रहाणां स्थिति: दण्डयोगम् उत्पादयति।

१०. लग्न–चतुर्थ–सप्तम–दशमभावेभ्य: इत्यर्थ:।

११. द्वितीयादष्टमभावपर्यन्तं ग्रहस्थितिवशात् प्रथमार्द्धचन्द्रयोग उपतपद्यते।

१२. अष्टौ भेदा:।

१३. चतुष्प्रकारका:।

१४. लग्नचतुर्थस्थानयो: सर्वे ग्रहा: चेत् प्रथम गदायोग:।

१५. अर्द्धचन्द्रस्य आकृतिसदृश:।

१६. लग्ने सप्तमे च सर्वे ग्रहा: भवन्ति चेत् शकटयोग: भवति।

१७. १-४-७-१० स्थानानि।

१८. लग्नं विहाय सर्वेषां ग्रहाणां त्रिकोणयो: स्थित्या हलयोग: विचार्यते।

१९. लग्नादारभ्य एकैकं स्थानं त्यक्त्वा सर्वे ग्रहा तिष्ठन्ति चेत् चक्रयोग: भवति।

२२. द्वितीयभावन: द्वादशपर्यन्तं एकैकं राशिं विहाय सप्तस्थानेषु सर्वे ग्रहा: तिष्ठन्ति चेत् समुद्रयोग:।

## २२.११ अभ्यासप्रश्ना:

१. नौकायोग: क: ?

२. कूटयोगेन किमवगम्यते ?

३. 'कार्मुक' शब्दस्य कोऽर्थ: ?

४. द्वितीयार्द्धचन्द्रनामकयोग: क: ?

५. अर्द्धचन्द्रयोगस्य कति भेदा सन्ति ?

६. षष्ठार्द्धचन्द्रयोग: क: ?

७. गदायोगा: कति ?

८. तृतीयप्रकारका: गदानामयोगा: के ?

९. किन्नाम् शकटयोग: ?

१०. कानि केन्द्रस्थानानि भवन्ति ?

११. चक्रयोग: किमस्ति ?

१२. हलयोगस्य विचार: कथं क्रियते ?

१३. समुद्रयोगस्य विचार: कथं क्रियते ?

१४. शृङ्गाटकयोग: किम् ?

१५. 'विहग' शब्दस्य कोऽर्थ: ?

१६. कमलयोगस्य विचारं कथं भवति ?

